श्रेष्ठि-देवचन्द्र लालभाई जैनपुस्तकोद्धारे-ग्रन्थाङ्कः १७.

आचार्य-श्रीमलयगिरिविरचितटीकासंयुक्ता

# श्रीकर्मप्रकृतिः ॥

श्रीमच्छिवशर्माचार्यपादप्रणीता.

प्रकाशकः-शाह नगीनभाई घेलाभाई झवेरी, अस्यैकः कार्यवाहकः।

मुद्रणप्रयासकर्त्री-श्रीभावनगरस्थ श्रीजैनधर्मप्रसारकसंसद्.

इदं पुस्तकं मुंबय्यां शाह नगीनभाई घेलाभाई-झवेरीबाजार इत्यनेन

निर्णयसागरमुद्रालये कोलभाटवीथ्यां २३, तमे गृहे आर् वाय. शेडगेद्वारा मुद्रयित्वा प्रकाशिता.



मुम्बय्याम् [all rights reserved] प्रति ५५०

वीरसंवत् २४३९ विक्रमनृपाब्द १९६९. इसुकाब्द १९१३.

# कर्मप्रकृत्युपोद्घातः ।

## प्रपोस्फुरीतु प्रणतिप्रवाहः परमैश्वर्यमयपरमेश्वरपादयोः ।

---

जगति तावद्विज्ञानविषये वेविद्यमानो वर्गो विदुषां वर्तनावर्तनीमवतीर्णो विश्वोऽपि प्राणभृद्वारोऽहमहमिकापुरस्सरं प्रवृत्तिमाद्रियमाणो विद्यत इति विदाङ्करोति । न चास्ति साध्यता प्रतिप्राणि प्रसिद्धपूर्वेषु प्राणिषु स्वस्वविषयकसुखिदुःखित्वानेकविषयविषयकैककर्तृत्वभूतविलक्षणविज्ञानवत्त्वदृश्यमानभूतसंहतिकारित्वादिभिः कणशोऽपि जीवास्तित्वाभ्युपगमायाप्तसार्थास्तिकसंज्ञान् ससंज्ञानानभि, यद्यप्यपजानीत एव कश्चित्पारमार्थिकीं जीवसत्तां केवलमुररीकृत्य ब्रह्माद्वितीयतां दरीदृश्यमानविचित्रभूतवृत्तिसनाथां कश्चिदास्तिकाभिधानावहः तिरस्करोति च लोकायितैरप्यतिरस्कृतमाबालगोपालाङ्गनाजनसिद्धं व्यवहारैकमूलमध्यक्षं, तथापि वेविद्यत एव व्यावहारिकी वर्ण्यमानाऽभिप्रेयमाणा च जीवास्तिता तत्कैरिति नार्थोऽमीभिर्विदुषां विवादेनास्तित्वेऽसुमतां, तद्वदेव प्रतिप्राणि सुखदुःखादिवैचित्र्यस्य तात्त्विकस्योपलम्भान्न वोभूयते कश्चिदिष्टेष्टाविरुद्धपरमार्थाभिधायिन्याप्तागमे "पुढो सत्ता पुढो कम्मा" इति वर्णनचणे विप्रतिपन्नः, भवेदितरथा प्रतिप्राणि प्रसिद्धस्य सुखदुःखव्यवहारस्य प्रचुरानर्थनिबन्धनाज्ञानस्य समस्तार्थसाधनसमर्थज्ञानस्य विविधोपदेश्योपदेशकभावस्य विविधगतिभ्रमणभोग्यसुकृतदुरितावलेः सर्वथा समुच्छेदसंपत्तिः । अस्ति च तुल्यसाधनानां फले

विशेषात् सुखदुःखवैचित्र्योपलब्धेः अविषमकारणस्य कार्यवैचित्र्यस्याकारणत्वप्रसङ्गात् गर्भावताराद्यसमयवैचित्र्यनि-
बन्धनस्य तत्करणकालतद्भजनाभिसंधायकवस्तुविशेषसद्भावसिद्धेः स्वीकार्यमवश्यं शुभाशुभोभयभेदमदृष्टं । एतावति च
साधने विद्यमानेऽपि येऽपलपन्त्यात्मनामदृष्टस्य च सत्तां ते कीदृश इत्यालोचनीयं स्वयं विविक्तसदसन्मार्गैः सद्भिः ।
अदृष्टं चानेकधाऽनेकविधतत्कार्योपलब्धेः । यद्यप्यन्यैरस्य कल्पिते भिदे शुभाशुभे इत्याकलय्य शुभाशुभतां व्यवहार-
पथाश्रितां, भेदा अपि च व्यवहारानुसारिण एव श्रिता भूघनगुणघातावगुणवर्गविधानसावधानाः, न त्वात्मतद्गुणघा-
तादिप्रवणा अभ्युपगता निरन्तरमनुगम्यात्मीयाभियुक्ततति, तथापि लोकालोकावलोकनलम्पटकेवलवेदोऽवलोकित-
सूक्ष्मदूरामूर्त्तव्यवहितेतरार्थसार्थाः सर्वविदोऽवगम्य यथायथमात्मनां वारमावृतं वृन्दं तद्गुणानामावारकं चातत्त्वश्रद्धा-
पापाविरमणक्रोधाद्यन्तरारातिवर्गस्वान्तादिव्यापारोर्जितमूर्जस्वलं अनुकूलेतरसामग्रीसंयोजनसमुद्भाविताकाशाद्यतीतमू-
र्तिकपदार्थनिर्वेहातिक्रान्तरूपं कर्मणामष्टकं रूपपरीतस्वरूपं यत्नसंपाद्यक्षयं निर्दिदिक्षुर्दीक्षितेतरजनेभ्योऽशेषकर्मकायक-
षणकल्पनाकोविदेभ्यः तस्य बन्धादिस्वरूपं निबबन्धुश्च मालाकारा इव पूज्यपादा गणधारिण उदीर्णप्राग्भवभव्यभाव-
भूतश्रेयोभावनोद्भावितगणभृत्कर्मोदयासशक्राद्यखिलनाकिनरनिकायासाधारणगणेशितृत्वाः सुमनस इव सुमनसः सुमन-
स्त्वापवर्गित्वसाधनसमर्थार्थ्यर्थनीया वाचो जगदीश्वरास्यनिसृता भव्यवारहितैकनिहितान्तःकरणाः सूत्रेणैव निर्युक्त-
निरवशेषार्थसमूहसूचनसमर्थेनातिलघीयसोपेतेन गुणैर्द्वात्रिंशता निपुणतमेन सूत्रेण द्वादशाङ्गीमयेन, गम्भीरतराश्चातताः
पदार्थाः परमकृपानुगतहृदयंगमैर्द्वादशेऽङ्गे, सिद्धान्तितं च सिद्धान्ततत्त्वामृतपानपीवरैः पीवरभागधेयैर्भगवद्भिरभियुक्तो-

त्तमैरङ्गानामेकादशकं वालस्त्रीमन्दमूर्खाणामतुलोपकारकृतये श्रीमद्भिर्गुणगणधुराधरणधौरेयैरुद्धृतं द्वादशादङ्गादिति। हेतु-
श्चैष एव तथाविधानां गहनतमानां कर्मग्रन्थकर्मप्रकृतिपञ्चसङ्ग्रहसप्ततिकप्रभृतीनामनन्यस्थानानां तत एवोद्धारे। न हि
लभ्यते व्यवस्थितिरनर्घाणां रत्नानामन्तरा रत्नाकरं। प्रमाणं चाप्येतदेव तस्य सत्तासमीक्षायां प्रेक्षाचक्षुष्काणामनन्यप्रणे-
यपदार्थप्रपञ्चप्रपञ्चनपटुप्रकरणप्रचयप्रवरसाधनतासिद्धिर्या, स्पष्टं चैतत्पूर्वाणां चतुर्दशानां चतुर्णां सदावस्थितदिष्टनियत-
परिमाणवद्विदेहजसामजानां मषीपुञ्जैर्लेख्याद्द्वितीयात्पूर्वात् पञ्चमाद्विंशतिप्राभृतमानाद्वस्तुनश्चतुर्थात्कर्मप्रकृत्याख्यात्प्रा-
भृतात् आपोद्धारनदीरयोवाहमित्यागमीयगमावगमानां, निवन्धनं चेदमेव दृष्टिवादनदीष्णानां प्रस्तुतप्रकरणोनतापूर्ण-
तंननचिङ्गसेः गाथायां षट्पञ्चाशत्तमायां अष्टकरणप्रकरणप्रभृतेः पूर्णतायां, तदेवमवसितमभिधेयं कर्मणां वन्धादीति।
न च वाच्यं निष्प्रयोजनमिदमात्मश्रेयोऽर्थिनां, ज्ञानदर्शनचारित्राणां निःश्रेयसनिदानानामन्यतमस्यासिद्धेः, सज्ज्ञानचा-
रित्रमूलस्य सद्दर्शनस्य तत्त्वार्थश्रद्धानात्मकस्यात्मतद्गुणतदावरणतद्धेतुवन्धनिरोधनाशसमूलक्षयादीनामनवगमेऽवस्थानास-
म्भवात्। अत एवोदितमुदितदयानिर्झरैः "दविए दंसणसोही" त्ति। किं च यावन्नावगतं कर्मणां प्रकृत्यादि उच्छदश्च
मूलतो न तावदवगच्छत्यात्मनो विशुद्धेरपकर्षोत्कर्षौ वृद्ध्यादि च गुणानां। न च विजानाति निरोधोपायं गुणस्थाने
मोक्षसौधसोपानसन्निभे विधेयं समारोहेण। न चाधिगच्छति तात्त्विकं गतिभ्यश्चतसृभ्यो निर्वेदं कर्मकण्ठीरवकदर्थनाक-
क्षपितव्यथाविचिन्तनततं। तदावश्यकमेवाध्ययनं द्रव्यानुयोगानिमेषनदीप्रवाहप्रवर्तनपार्वतीपितृपर्वतप्रभस्यैतादृशस्य
प्रकरणस्य। सत्येव च सद्दर्शने स्याद्भूतिर्ज्ञानचरणयुगस्येति "आद्यत्रयमज्ञानमपि, भवति मिथ्यात्वसंयुक्तम्" "सयस-

यविसेसणाऊं, जवहेउ जइक्षिउंवधंजाउं । नाणफलाजायाउं, मिछादिठिस्स अन्नाणं ॥ १ ॥" "नादंसणिस्स नाणं, नाणेण विणा न हुंति चरणगुणा" इत्याद्यागमाञ्जनव्यक्तविवेकविलोचनतेजसां न कथञ्चनापि विद्यते साध्यतास्पदं । निमित्तं चैतदेवात्र प्रथनविवरणबोधनमुद्रणादावयधेयं धीमद्भिरनन्यत् ।

प्रणेतारश्चैतस्याः प्रकृतायाः कर्मप्रकृत्याः श्रीमन्तः शिवशर्माचार्यपादाः पूर्वधराः प्रवरतमत्वादेवैषां प्रामाण्यस्य यत्र कुत्रचनापि समारोहति विरोधगन्धोऽपि सूत्रेण प्रचलितेन तदातनेन तत्र नैवाप्रामाणिकतामापादयितुं पार्यते केनचनापीत्यारूढं कार्मग्रन्थिकसैद्धान्तिकमिति मतद्वयं । अत एव च जैनानां कल्पनाकोविदपदार्थपटीयस्ता नागमवाक्यं विरहय्येति प्रामाणिकतानिबन्धनं पूज्यपादानां पूर्वधरत्वस्याख्यापकं च, अन्यथाविधस्य तथास्पर्धाकोट्यामागमेनारोहाजावादिति । परं कदा कतमं च जूषयामासुर्जन्मक्षणं जगवत्पादाः के च तादृग्माहात्म्यजानुविजावनजास्वन्तो गुरव इति न निश्चीयतेतरां, जगवन्महिम्नां दृष्टिवादमूलत्वस्य च संसिद्धिः मदीयकथनमपेक्ष्य प्रस्तुतात्प्रकरणाज्ज्ञानविषयीकृताज्ञानिनी विशेषेणेति तदेवोपदीक्रियते कृतिन्यः । प्रकरणे चात्र क्रमशो ह्यधिकशतैकादशाधिकशतदशैकान्ननवत्येकसप्ततित्रिनिर्गाथानां वन्धन-सङ्क्रमो-द्वर्तना-पवर्तनो-दीरणो-पशमना-निधत्ति-निकाचनाह्वयैः करणैः उदयः सत्ता च द्वात्रिंशता सप्तपञ्चाशता च सर्वसङ्ख्यया च पंचसप्तत्यधिकचतुःशत्या गाथाभिः न्यरूपिपत सद्भूतवस्तुस्वरूपनिरूपणैकचञ्चुभिर्जगवद्भिः । उद्वर्तनापवर्तने निधत्तिनिकाचने चात्र संमीलितान्येव सङ्ख्यायामिति सङ्ख्येयं सङ्ख्यावद्भिः स्वयं । विशेषतोऽभिधेयमभिहितमनुक्रमणिकायामस्या इति न तत्रायासारम्भः ।

विवृता चेयं उभयैः पूज्यैर्गीर्वाणवाण्या श्रीमद्भिर्मलयगिरिपादैः काशीविबुधविजयावाप्तन्यायविशारदप्रचुरग्रन्थ-ग्रथनवितीर्णन्यायाचार्यपदोभयीभूषितभूषनैर्महोपाध्यायैर्यशोविजयगणिभिः, मूलभूता चोभयोर्विवृत्योश्चूर्णिरेव प्राक्तन-पूज्यैरनिर्धारितविशेषनामभिः श्रीमद्धरिभद्राचार्यसत्ताकालादपि प्राचीनैर्निर्मिताऽत एव गुणोत्कीर्तनद्वाराऽन्यद्वौपुरस्त्रारम्भे "अयं गुणश्चूर्णिकृतः समग्रो यदसदादिर्वदतीह किञ्चित्" इत्यादिना । सत्स्वप्येवं विवरणत्रिकेषु सुगमत्वात्संस्कृतवाणीवि-लासप्रियत्वात्सुलभपुस्तकत्वाच्च प्रक्रान्तैषा मुद्रितुं श्रीजैनधर्मप्रसारकसंसत्सत्प्रयासेन श्रेष्ठिश्रीदेवचन्द्र लालभाई जैनपुस्तकोद्धार-द्रव्यव्ययेन, सम्पूर्णतामगमच्च मुद्रणमस्याः । मन्ये उपयोगिकार्यव्ययः संसदो द्रम्माणां, आशासे च भविष्यति भविष्यति विवृतेरन्यस्या अपि विस्तृतेरुन्मुद्रणं । परिकलय्यैनां यथावत्कर्मविपाकभीताः समाचरन्तु सज्जना ज्ञानपीयूषपूर्णा आत्मस्वच्छसाधनसावधाना अनाश्रवव्यवदानासाधारणसाधनाः क्रिया यथावदाप्तोदिता इत्य-र्थयमान आनन्द उदन्वदन्ताभिधानः समापयत्येनामुपक्रान्ति गुणगणरत्नरोहणमोक्षमार्गारोहणचणश्रमणसङ्घचरण-कमलचञ्चरीको वितीर्य प्रमादादिदोषोद्भवविरुद्धोच्चारणोद्भूतदुरितरजोदूरणसमीरणं मिथ्यादुष्कृतं श्रीसार्वादिसाक्षिकम् ।

प्रतिपद्यसिते पक्षे फाल्गुनिकेऽङ्करसाङ्कविधु ( १९६९ ) मिते वर्षे ।

श्रीकर्यामान्दीदिममानन्दः कर्मकक्षाग्निम् ( कर्मततिबोधम् ) ॥ १ ॥

विज्ञप्तिरेषाऽध्येत्रध्यापकेभ्यो यद्भुत गाथानां मा भूत्त्रुटिरिति नात्र प्रत्यधिकारं पादादिधृतिः ।

# अनुक्रमणिका।

इति सत्ता २२२ पत्रं यावत्

इति विषयानुक्रमः

Sheth Devchand Lalbhai Jain Pustakoddhár Fund Series. No. 17.

## PREFACE.

The Trustees of the Sheth Devchand Lalbhai fund have great pleasure in publishing the present book entitled "*Kammapayadi*" or *Karmaprakriti*, an authoritative treatise on the theory of Karma in its manifold aspects—a compendium of learning on Karmic law i e the laws of Evolution and Involution as propounded by the Jaina Darshana The Jains have developed the theory of Karma in a most wonderful way claiming the highest consideration at the hands of savants of Europe That theory is based on the law of evolution and satisfies both the reason and the imagination The Jains claim very rightly the first place in developing the theory of Karma, in as much as they have the most reasonable explanation of the working of Karmas in relation to a potentially pure soul They have worked out its various stages in absorption, manifestation, drawing, potentiality &c which themselves are manifold and possess various degrees of capacities when absorbed by the Soul There are many

special treatises dealing with the subject of the eternal laws of Karmas, great and small, and the present volume of *Kammapayadi* occupies a very high place among them

The present *Kammapayadi* was composed by *Shivasharma Soori* in about 475 stanzas (Gâthâs) It is an excerpt from the *Karmapravâda Poorva* Jains believe in the fourteen Poorvas, voluminous expositions of miscellaneous Jain literature all of which are now extinct *Karmapravâda* is said to be the tenth of those fourteen Poorvas, the revered *Shivasharma Soori* appears to have extracted the original 475 stanzas therefrom With the present means of knowing historical facts, it is not possible to give the exact date of this highly talented Soori, the composer or extractor of this book, but circumstantial evidence leads one to suppose that he belongs to a very early period He can be safely said to have flourished before the fifth century A D as the name of the present book *Kammapayadi* has been mentioned in the *Sthavirâvali* of *Nandisootra*, one of the original *Âgamas* at the time of the redaction of all the Âgamas by *Devardhigani Kshamâshramana* at *Vallabhipura* in the year 456 A D ( corresponding with the year 980 Veera and 510 Vikrama ) This great saint *Devardhigani* took great pains in the task of redaction in the fourth century and the fact of translation being historical is very useful in fixing dates of authors who flourished previous to the said important era in the Jaina literature As the name of the present treatise has been clearly mentioned in one of the books translated under the personal supervision of *Devardhigani Kshamâshramana*, himself

a giant of learning, one can very safely lay down the original date of the present dissertation on the theory of Karma, in the third century without possibility of any doubt in the matter.

Nothing is known about the personal history of the said *Shivasharma Soori* as is generally the case with almost all Jain authors who flourished before the period. There is a general dearth of information on the subject as people in those days appear to have cared very little for their personality. Unfortunately the history of the period of about 980 years after the Nirvâna of Lord *Mahâvira* is still to be unearthed but in the present state of ignorance on the subject nothing can be definitely said on the subject. The after-history can be found out and there are ample materials for the same, but as far as the history of the period under consideration is concerned, inquiry has to be pursued with the help of coins, writings, manuscripts &c.

The present publication contains a very exhaustive commentary in sanskrit upon *Kammapayadi* by *Malayagiri*, a commentator of vast resources and a thorough grasp of the subject. Being a commentator of great reputation, it would not be out of place to give here a list of his commentaries for the information of the public as the same is very likely to show the amount of learning possessed by this great Commentator. The following list of his commentaries will show that not only did the present commentator prepare and publish several commentaries but that his efforts

were also directed to a number of subjects, philosophical, metaphysical and ethical. The commentaries composed by the said *Malayagiri* are as under with the approximate number of slokas.

| Commentary | | Slokas |
|---|---|---|
| Dwitiyashataka Vritti (?) | ... | 3750 |
| Râjaprashniya Vritti | ... | 3700 |
| Jivâbhigama Vritti | ... | 14000 |
| Pragnâpanâ Vritti | ... | 14500 |
| Chandrapragnapti Vritti | ... | 9000 |
| Sooryapragnapti Vritti | ... | 9500 |
| Vyavahâr Âgama Vritti | ... | 33625 |
| * Âvashyaka Vritti | ... | 18000 |
| Visheshâvashyaka Vritti (?) | ... | 9000 |
| Brihat Vritti on Pinda Niryukti (6700) | | 7500 |
| Brihat Vritti on Nandi sootra | ... | 3772 |
| | | 1,26,347 |

| Commentaries on books of philosophies: | | |
|---|---|---|
| On Shadashiti (Karma.) | ... | 2000 |
| On the sixth book of Karmagrantha known as Sittori Karmagrantha | ... | 3780 |
| On Brihat Kshetra samâsa | ... | 7887 |
| On Brihat Sangrahani of Jinabhadra Gani Kshamâshramana | ... | 5000 |
| † On Dharma Sangrahani | ... | 11000 |
| **Commentaries on *Payannas*:** | | |
| Jyotisha Karandaka Vritti | ... | 5000 |
| | | 34,667 |

1,61,014

* Some say it is 22 or 18 thousand.  † (The last book is under publication by the trustees of these funds).

The above list is quite sufficient to show the multifarious knowledge of *Malayagiri* the commentator of the present book His commentary is very exhaustive besides being a compendium of learning *Malayagiri* occupies a very eminent place as a commentator as whatever subjects he has taken up are commented upon by him after a careful study thereof He has never treated any of his subjects commented upon in a slipshod or off hand manner and therefore it is quite natural he has been given such a high place as a commentator The present work *Kammapayadi* has been commented upon by the following commentators, which commentaries are also available

A commentary (Vritti) of 13000 Slokas composed by *Yashovijaya Upâdhyâya* who flourished in the seventeenth century and who commanded the highest respect and veneration from the Jains of his time and whose reputation as a student of logic and as an authority on several important topics, has remained absolutely unabated even up to the present time The trustees of Sheth Devchand Lalbhai funds hope to publish this commentary also in the near future as it is both useful and exhaustive

A commentary (Chûrni) of about 7000 Slokas on the present book Unfortunately the author s name is not yet found out as some of this Churni which are available at present are generally incomplete After this was sent to the press, we have learnt that a manuscript embodying the whole commentary is available in the Cambay library (पुस्तकभंडार) We have not yet seen it and there fore cannot give the name of the author

Short notes (Tippana) of *Nemichandra* of about 2000 slokas

Of the commentator *Malayagiri* nothing is known It is a matter of great regret that owing to certain inexplicable reasons these personages who flourished in the bye gone times never cared to write anything about their personal history for the use of posterity, as the same was not considered of any material use Being driven to undertake or compose works of high authority purely out of consideration of charity and obligations on the future generations, it appears they never cared for their own fame Otherwise it is very difficult to explain the absence of any history even the date or the period when the respective authors flourished especially where one knows that the respective work composed by them, command the highest admiration and continue to occupy an eminent place as the best exposition of the subject treated therein Whatever may be the reason of the absence of any regular history, the same is the case with *Malayagiri* also After making close inquiries into the matter one is really constrained to admit that absolutely nothing is known about the Man —the Saint, or about the time of the commentator In this state of things it is clear, nothing can be said about the contemporaries or the society of the time of the present Commentator The only thing which can be traced from Pattâvali (the history of great Âchâryas of each era) is that the present author flourished before the thirteenth century of Vikrama However the whole thing at present is shrouded in complete darkness. It is hoped some students of antiquarian interests will take

up the subject and throw some light thereon. The present publication was prepared for and put through the press by the Jain Dharma Prasâraka Sabhâ of Bhavnagar At the suggestion of Mahârâja *Shri Ânanda Sâgar* the present publication has been entrusted to the trustees by the said institution. The whole work of preparing press copies and examining proofs was done by the said Jain Dharma Prasaraka Sabha under the supervision of Mahârâja *Ânanda Sâgar*. The trustees take this opportunity of expressing their sense of gratitude and obligation to the said institution and Mahârâja *Ânanda Sâgar, the latter of whom has placed the trustees under constant obligation by his promptness,* diligence and readiness in helping forward the publication of several books and fulfilling the aims and objects of the trusts

This is our "Seventeenth Volume."

JAVERI BAZÂR,
BOMBAY.
*November, 1913.*

NAGINBHAI GHELABHAI JAVERI,
*for the Trustees of*
The Sheth Devchand Lalbhai Jain Pustakoddhâr Fund.

श्रीमलयगिरिकृत–टीका–संयुक्ता.

# कर्मप्रकृतिः

श्रीवीतरागाय नमः।

प्रणम्य कर्मद्रुमचक्रनेमिं, नमत्सुराधीशमरिष्टनेमिम्। कर्मप्रकृत्याः कियतां पदानां, सुखावबोधाय करोमि टीकाम्॥ १॥
अयं गुणश्रेणिकृतः समग्रो, यदसदादिर्वदतीह किञ्चित्। उपाधिसंपर्कवशाद्विशेषो, लोकेऽपि दृष्टः स्फटिकोपलस्य॥ २॥

इह शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्तमानाः सन्त इष्टदेवतानमस्कारपुरःसरमेव प्रवर्तन्ते। न चायमाचार्यो न शिष्ट इति शिष्टसमयपरिपालनाय, तथा श्रेयांसि बहुविघ्नानि भवन्ति उक्तं च–"श्रेयांसि बहुविघ्नानि, भवन्ति महतामपि। अश्रेयसि प्रवृत्तानां, क्वापि यान्ति विनायकाः॥ १॥" इति। इदं च प्रकरणं सम्यग्ज्ञानहेतुत्वाच्छ्रेयोभूतमतो मा भूदत्र विघ्न इति विघ्नविनायकोपशान्तये चेष्टदेवतानमस्कारं। तथा न च प्रेक्षापूर्वकारिणः क्वचिदपि प्रयोजनादिविरहे प्रवर्तन्त इति प्रेक्षावतां प्रवृत्त्यर्थं प्रयोजनादिकं च प्रतिपिपादयिषुरादाविदमाह—

सिद्धं सिद्धत्थसुयं, वंदिय निद्धोयसव्वकम्ममलं। कम्मट्ठगस्स करणट्ठमुदयसंताणि वोच्छामि ॥ १ ॥

सिद्धमिति–इह पूर्वार्धेनेष्टदेवतानमस्कारस्याभिधानं, उत्तरार्धेन तु प्रयोजनादीनां । तत्र सितं बद्धं ध्मातं भस्मीकृतमष्टप्रकारं कर्म येन स सिद्धः । पृषोदरादित्वादिष्टरूपनिष्पत्तिः यथा ब्रुवन्तः सीदन्त्यस्यामिति बृसीत्यत्र । त वन्दित्वेति क्रियायोगः । स च नामतोऽपि कश्चिद्भवति, विद्यासिद्धादिर्वा सिद्ध इति लोके प्रतीतस्ततस्तद्व्यवच्छेदार्थं यथोक्तान्वर्थसूचकमेव विशेषणमाह–निर्धौतसर्वकर्ममलं नितरामपुनर्भावेन · धौतः सम्यग्दर्शनज्ञानचारित्रतपःसलिलप्रभावेणापगमितः सर्व एव कर्मैवाष्टप्रकारं जीवमालिन्यहेतुत्वात् मल इव मलो येन स निर्धौतसर्वकर्ममलः (तं) । अनेनानादिशुद्धपुरुषप्रवादप्रतिक्षेप आवेदितो द्रष्टव्यः । विशेष्यमाह–सिद्धार्थसुतं सिद्धार्थस्य सिद्धार्थनरेन्द्रस्य, सुतमपत्यं वर्धमानस्वामिनमित्यर्थः । अनेन भगवत उत्तमजात्यैश्वर्यादिगुणसंपत्प्रकर्षमाह । अथवा सिद्धमिति विशेष्यं, सिद्धत्थसुयमिति विशेषणं । तत्र सिद्धार्थं सिद्धप्रयोजनं संसारान्निस्तारणस्य कृतत्वात् श्रुतं द्वादशांगं यस्याभूत् स सिद्धार्थश्रुतस्तं । अनेन श्रुतस्य संसारनिस्तारणं प्रत्यविकलं सामर्थ्यमावेद्यते । यद्वा सिद्धार्थाः सिद्धप्रयोजना मोक्षप्राप्तिभावात् सुता इव सुताः शिष्या गणधरादयो यस्य स सिद्धार्थसुतस्तं । अनेन भगवतः संततेरपि विशिष्टफलातिशयभाक्त्वमावेदयति । अत एव च भगवान् प्रेक्षावतां प्रणामार्हः । तमित्थंभूतं वन्दित्वा । किमित्याह–वक्ष्यामि प्रतिपादयिष्यामि । कर्माष्टकस्य बन्धसंक्रमादिहेतुभूतं करणाष्टकं उदयसत्त्वे च । तत्र कर्माष्टकं ज्ञानावरणदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रान्तरायरूपं । एतच्चान्यत्र पञ्चसंग्रहादौ सप्रपंचमभिहितमिति नेह प्रतन्यते, केवलं तत एवावधारणीयं । तस्य बन्धसंक्रमादि-

कारणभूतं । करणानां वीर्यविशेषरूपाणामष्टकं करणाष्टकं बन्धनादि वक्ष्यमाणं । तथा कर्मपुद्गलानां यथास्थितिबद्धानामबाधाकालक्षयेणापवर्तनादिकरणविशेषतो वा उदयसमयप्राप्तानामनुभवनमुदयः । तेषामेव कर्मपुद्गलानां बन्धसंक्रमाभ्यां लब्धात्मलाभानां निर्जरणसंक्रमकृतस्वरूपप्रच्युत्यभावे सति सद्भावः सत्ता । इह करणाष्टकोदयसत्ता अभिधेयाः । तत्परिज्ञानं श्रोतॄणामनन्तरं प्रयोजनं, आचार्यस्य त्वनन्तरं प्रयोजनं परानुग्रहः । परंपराप्रयोजनं तूभयोरपि निःश्रेयसावाप्तिः। संबन्धस्तूपायोपेयभावलक्षणः। तथाहि–वचनरूपापन्नं प्रकरणमुपायः, तत्परिज्ञानाद्यु(नं चो)पेयमिति॥१॥

तत्र यथोद्देशं निर्देश इतिन्यायात्प्रथमतः करणाष्टकमभिधित्सुराह—

बंधण १ संकमणु २ व्वट्टणा य ३ अववट्टणा ४ उदीरणया ५ ।
उवसामणा ६ निहत्ती ७ निकायणा ८ च त्ति करणाइं ॥ २ ॥

बंधणेति–इह करणशब्देन सह पर्यन्ते सामानाधिकरण्याभिधानात्प्रत्येकं करणशब्दोऽभिसंबन्धनीयः । तद्यथा–बन्धनकरणं संक्रमकरणमित्यादि । तत्र बन्धो नाम कर्मपुद्गलानां जीवप्रदेशैः सह वह्न्ययःपिण्डवदन्योऽन्यानुगमः १ । संक्रमः प्रकृतिस्थित्यनुभागप्रदेशानामन्यकर्मरूपतया स्थितानामन्यकर्मस्वरूपेण व्यवस्थापनं २ । स्थित्यनुभागयोर्बृहत्करणमुद्वर्तना ३ । तयोरेव ह्रस्वीकरणमपवर्तना ४ । कर्मपुद्गलानामकालप्राप्तानामुदयावलिकायां प्रवेशनमुदीरणा ५ । कर्मपुद्गलानामुदयोदीरणानिधत्तिनिकाचनाकरणायोग्यत्वेन व्यवस्थापनमुपशमना ६ । उद्वर्तनापवर्तनावर्जशेषकरणा-

योग्यत्वेन व्यवस्थापनं 'निधत्तिः ७। समस्तकरणायोग्यत्वेन व्यवस्थापनं निकाचना ८। उक्तस्वरूपबन्धादिनिबन्धनभूताश्च जीववीर्यविशेषा बन्धनादीनीत्युच्यन्ते, तथाव्युत्पत्तिभावात् । तथाहि—बध्यतेऽष्टप्रकारं कर्म येन तद्बन्धनं १। संक्रम्यतेऽन्यप्रकृत्यादिरूपतया व्यवस्थाप्यते येन तत्संक्रमणं २। उद्वर्त्यते प्राबल्येन प्रभूतीक्रियते स्थित्यादि यया जीववीर्यविशेषपरिणत्या सोद्वर्तना ३। अपवर्त्यते ह्रस्वीक्रियते स्थित्यादि यया साऽपवर्तना ४। अनुदयप्राप्तं (उदयाप्राप्तं) सत्कर्मदलिकमुदीर्यत उदयावलिकायां प्रवेश्यते यया सोदीरणा ५। उपशम्यते उदयोदीरणानिधत्तिनिकाचनाकरणायोग्यत्वेन व्यवस्थाप्यते कर्म यया सोपशमना ६। निधीयत उद्वर्तनापवर्तनावर्जकरणायोग्यत्वेन व्यवस्थाप्यते यया सा निधत्तिः ७। पृषोदरादित्वाच्छब्दरूपनिष्पत्तिः । तथा कच बन्धने, नितरां कच्यते स्वयमेव बन्धमायाति कर्म जीवस्य तथाविधसंक्लिष्टाध्यवसायपरिणतस्य, तत्प्रयुंक्ते जीव एव तथानुकूल्येन जवनात्, ततः प्रयोक्तृव्यापारे णिच् (श्रीमं. आ-६-५) ततो निकाच्यतेऽवश्यवेद्यतया व्यवस्थाप्यते कर्म जीवेन यया सा निकाचना । अथवा कच बन्धने इति चौरादिकोऽप्यस्ति, ततो निकाच्यतेऽवश्यवेद्यतया निबध्यते यया कर्म सा निकाचना जीववीर्यविशेषपरिणतिः ८। चः समुच्चये। इतिः परिसमाप्तौ, एतावन्त्येव करणानि, नाधिकानि । इति ॥ २ ॥

---

१ श्रीमत्प्रणीत रुचिरतरमस्त्येव शब्दानुशासनं सवृत्तिकं, तत्र नामाख्यातकृदाख्यं यथार्थाख्यं प्रकरणत्रयं क्रमेण नवदशपट्पादप्रमाणं, ततश्चात्र श्रीमलयगिरिपूज्यपादकृतिप्रकरणपादसूत्रसङ्ख्यासूचनं क्रमेणावसेयमध्यवसितवाङ्मयसारैः ।

करणानि चामूनि जीववीर्यविशेषरूपाणीति प्रथमतो वीर्यमेव प्ररूपयति—

**विरियंतरायदेसक्खएण सव्वक्खएण वा लद्धी । अभिसंधिजमियरं वा, तत्तो विरियं सलेसस्स ॥ ३ ॥**

विरियमिति–वीर्यान्तरायस्य देशक्षयेण सर्वक्षयेण वा लब्धिर्वीर्यलब्धिरसुमतामुपजायते । तत्र देशक्षयेण छद्मस्थानां सर्वक्षयेण (च) केवलिनां । तस्याश्च वीर्यलब्धेः सकाशादुपजायमानं वीर्यं सलेश्यस्यापि च भवति, अलेश्यस्यापि च । केवलमिह सलेश्यवीर्येणाधिकार इति तदेवोपदर्शयति–'अभिसंधिजमियरं वा तत्तो विरियं सलेसस्स' ततस्तस्याः क्षायिकक्षायोपशमिकरूपाया वीर्यलब्धेः सकाशात् सलेश्यस्य वीर्यमभिसन्धिजमितरद्वा भवति । तत्र यद्बुद्धिपूर्वकं धावनवल्गनादिक्रियासु नियुज्यते तदभिसन्धिजं, इतरदनभिसन्धिजं । यद्भुक्तस्याहारस्य धातुमलत्वरूपपरिणामापादनकारणं एकेन्द्रियाणां वा तत्तत्क्रियानिबन्धनं, एतच्चाभिसन्धिजमनभिसन्धिजं वा वीर्यमवश्यं यथासंभवं सूक्ष्मबादरपरिस्पन्दरूपक्रियासहितं, योगसंज्ञमप्येतदेव । एकार्थिकानि चास्यामूनि–"जोगो विरियं थामो, उच्छाहपरिक्कमो तहा चिट्ठा । सत्ती सामत्थं चिय, जोगस्स हवंति पज्जाया ॥ १ ॥" इति ॥ ३ ॥

संप्रत्यस्यैव योगस्य परिणामादिहेतुतां भेदं च,तथा जीवप्रदेशेष्वस्य वैषम्येणावस्थाने कारणं च प्रतिपिपादयिषुरिदमाह—

**परिणामालंबणगहणसाहणं तेण लद्धनामतिगं । कज्जब्भासन्नोन्नप्पवेसविसमीकयपएसं ॥ ४ ॥**

परिणामेति–परिणमनं परिणामः । णिजन्तात् घञ्प्रत्ययः (श्रीम. कु. ५–२) परिणामापादनमित्यर्थः । आलंब्यत

इत्यालंबनं, ज्ञावेऽनटू (श्रीम. कृ. ६–२)। गृहीतिर्ग्रहणं। तेषां साधनं साध्यतेऽनेनेति साधनं योगसंज्ञं वीर्यं, करणेऽनटू (श्रीम. कृ. ६–४)। तथाहि–तेन वीर्यविशेषेण योगसंज्ञकेनौदारिकादिशरीरप्रायोग्यान् पुद्गलान् प्रथमतो गृह्णाति, गृहीत्वा चौदारिकादिरूपतया परिणमयति। तथा प्राणापानभाषामनोयोग्यान् पुद्गलान् प्रथमतो गृह्णाति, गृहीत्वा च प्राणापानादिरूपतया परिणमयति। परिणमय्य च तन्निसर्गहेतुसामर्थ्यविशेषसिद्धये तानेव पुद्गलानवलंबते। यथा मन्दशक्तिः कश्चिन्नगरे परिभ्रमणाय यष्टिमवलंबते (मवष्टंभते)। ततस्तदवष्टंभतो जातसामर्थ्यविशेषः सन् तान् प्राणापानादिपुद्गलान् विसृजतीति परिणामालंबनग्रहणसाधनं वीर्यं। तेन च वीर्येण योगसंज्ञकेन मनोवाक्कायावष्टंभतो जायमानेन। 'लद्धनामतिगं ति' लब्धं नामत्रिकं। तद्यथा–मनोयोगो वाग्योगः काययोग इति। तत्र मनसा करणभूतेन योगो मनोयोगः, वाचा योगो वाग्योगः, कायेन योगः काययोगः। स्यादेतत्, सर्वेषु जीवप्रदेशेषु तुल्यक्षायोपशमिक्यादिलब्धिभावेऽपि किमिति क्वचित्प्रभूतं क्वचित् स्तोकं क्वचित्स्तोकतरमित्येवं वैषम्येण वीर्यमुपलभ्यत इत्यत आह–कज्जेत्यादि, यदर्थं चेष्टते तत्कार्यं, तस्याभ्याशः, अभ्यशनमभ्याशः, अशूङ् व्याप्तावित्यस्याङ्पूर्वस्य घञन्तस्य प्रयोगः, कार्याभ्याशः कार्यस्यासन्नता निकटीभवनमित्यर्थः। तथा जीवप्रदेशानामन्योऽन्यं परस्परं प्रवेशः शृंखलावयवानामिव परस्परं संबन्धविशेषः। ताभ्यां कृत्वा विषमीकृताः प्रभूताल्पाल्पतरसद्भावतो विसंस्थुलीकृताः प्रदेशा जीवप्रदेशा येन जीववीर्येण तत्कार्याभ्याशान्योऽन्यप्रवेशविषमीकृतप्रदेशं। तथाहि–येषामात्मप्रदेशानां हस्तादिगतानामुत्पाद्यमानघटादिलक्षणकार्यनैकट्यं, तेषां प्रभूततरा चेष्टा। दूरस्थानामंसादिगतानां स्वल्पा। दूरतरस्थानां तु पादादिगतानां स्वल्पतरा। अनुभव-

सिद्धं चैतत्। अपि च लोष्टादिनाऽभिघाते सति यद्यपि सर्वप्रदेशेषु युगपद्वेदनोपजायते, तथापि येषामात्मप्रदेशानाम-भिघातकलोष्टादिद्रव्यनैकट्यं, तेषां तीव्रतरा वेदना, शेषाणां तु मन्दा मन्दतरा। तथेहापि जीवप्रदेशेषु परिस्पन्दात्मकं वीर्यमुपजायमानं कार्यद्रव्यान्याशवशतः केषुचित्प्रभूतमन्येषु मन्दमपरेषु तु मन्दतमं भवति। एतच्चैवं जीवप्रदेशानां परस्परं संबन्धविशेषे सति भवति, नान्यथा यथा शृंखलावयवानां। तथाहि–तेषां शृंखलावयवानां परस्परं संबन्धविशेषे सति एकस्मिन्नवयवे परिस्पन्दमानेऽपरेऽप्यवयवाः परिस्पन्दन्ते। केवलं केचित् स्तोकमपरे स्तोकतरमिति। संबन्धविशेषाभावे त्वेकस्मिन् चलति नापरस्यावश्यंभावि चलनं, यथा गोपुरुषयोः, तस्मात्कार्यद्रव्यान्याशवशतो जीवप्रदेशानां परस्परं संबन्धविशेषतश्च वीर्यं जीवप्रदेशेषु केषुचित्प्रभूतमन्येषु स्तोकमपरेषु तु स्तोकतरमित्येवं वैषम्येणोपजायमानं न विरुध्यत इति ॥ ४ ॥

तदेवं वीर्यं प्रतिपाद्य संप्रत्यस्यैव जघन्याजघन्योत्कृष्टानुत्कृष्टत्वपरिज्ञापनाय प्ररूपणां चिकीर्षुरिमानर्थाधिकारानाह—

**अविभागवग्गफड्डगअंतरठाणं अणंतरोवणिहा। जोगे परंपरावुड्ढिसमयजीवप्पबहुगं[1] च ॥ ५ ॥**

अविभागेति–योगे योगविषये। प्रथमतोऽविभागप्ररूपणा कार्या १। ततो वर्गणाप्ररूपणा २। ततः स्पर्धकस्य प्ररूपणा ३। तदनन्तरमन्तरप्ररूपणा ४। ततः स्थानप्ररूपणा ५। ततोऽनन्तरोपनिधा ६। ततः परंपरोपनिधा ७। तदन-

---

१ एकप्रदेशावगाढौदारिकादिवर्गणाग्रहणवीर्यविचारोऽयमिति तूपाध्यायाः। परिश्रमवैचित्र्योपलब्धेः सर्वत्रैवमिति तु प्राञ्चः।

इत्यालंबनं, जावेऽनट् (श्रीम. कृ. ६–२)। गृहीतिर्ग्रहणं। तेषां साधनं साध्यतेऽनेनेति साधनं योगसंज्ञं वीर्यं, करणेऽनट् (श्रीम. कृ. ६–४)। तथाहि–तेन वीर्यविशेषेण योगसंज्ञकेनौदारिकादिशरीरप्रायोग्यान् पुद्गलान् प्रथमतो गृह्णाति, गृहीत्वा चौदारिकादिरूपतया परिणमयति। तथा प्राणापानभाषामनोयोग्यान् पुद्गलान् प्रथमतो गृह्णाति, गृहीत्वा च प्राणापानादिरूपतया परिणमयति। परिणमय्य च तन्निसर्गहेतुसामर्थ्यविशेषसिद्ध्ये तानेव पुद्गलानवलंबते। यथा मन्दशक्तिः कश्चिन्नगरे परिभ्रमणाय यष्टिमवलंबते (मवष्टंभते)। ततस्तदवष्टंभतो जातसामर्थ्यविशेषः सन् तान् प्राणापानादिपुद्गलान् विसृजतीति परिणामालंबनग्रहणसाधनं वीर्यं। तेन च वीर्येण योगसंज्ञकेन मनोवाक्कायावष्टंभतो जायमानेन। 'लब्धनामतिगं ति' लब्धं नामत्रिकं। तद्यथा–मनोयोगो वाग्योगः काययोग इति। तत्र मनसा करणभूतेन योगो मनोयोगः, वाचा योगो वाग्योगः, कायेन योगः काययोगः। स्यादेतत्, सर्वेषु जीवप्रदेशेषु तुल्यक्षायोपशमिक्यादिलब्धिभावेऽपि किमिति क्वचित्प्रभूतं क्वचित् स्तोकं क्वचित्स्तोकतरमित्येवं वैषम्येण वीर्यमुपलभ्यत इत्यत आह–कज्जेत्यादि, यदर्थं चेष्टते तत्कार्यं, तस्याभ्याशः, अभ्यशनमभ्याशः, अशूङ् व्याप्तावित्यस्याभिपूर्वस्य घञन्तस्य प्रयोगः, कार्याभ्याशः कार्यस्यासन्नता निकटीभवनमित्यर्थः। तथा जीवप्रदेशानामन्योऽन्यं परस्परं प्रवेशः शृंखलावयवानामिव परस्परं संबन्धविशेषः। ताभ्यां कृत्वा विषमीकृताः प्रभूताल्पाल्पतरसद्भावतो विसंस्थुलीकृताः प्रदेशा जीवप्रदेशा येन जीववीर्येण तत्कार्याभ्याशान्योऽन्यप्रवेशविषमीकृतप्रदेशं। तथाहि–येषामात्मप्रदेशानां हस्तादिगतानामुत्पाद्यमानघटादिलक्षणकार्यनैकट्यं, तेषां प्रभूततरा चेष्टा। दूरस्थानामंसादिगतानां स्वल्पा। दूरतरस्थानां तु पादादिगतानां स्वल्पतरा। अनुभव-

सिद्धं चैतत् । अपि च लोष्ठादिनाऽभिघाते सति यद्यपि सर्वप्रदेशेषु युगपद्वेदनोपजायते, तथापि येषामात्मप्रदेशानामभिघातकलोष्ठादिद्रव्यनैकट्यं, तेषां तीव्रतरा वेदना, शेषाणां तु मन्दा मन्दतरा । तथेहापि जीवप्रदेशेषु परिस्पन्दात्मकं वीर्यमुपजायमानं कार्यद्रव्यान्याशवशातः केषुचित्प्रभूतमन्येषु मन्दमपरेषु तु मन्दतमं भवति । एतच्चैवं जीवप्रदेशानां परस्परं संबन्धविशेषे सति भवति, नान्यथा यथा शृंखलावयवानां । तथाहि–तेषां शृंखलावयवानां परस्परं संबन्धविशेषे सति एकस्मिन्नवयवे परिस्पन्दमानेऽपरेऽप्यवयवाः परिस्पन्दन्ते । केवलं केचित् स्तोकमपरे स्तोकतरमिति । संबन्धविशेषाभावे त्वेकस्मिन् चलति नापरस्यावश्यंभावि चलनं, यथा गोपुरुषयोः, तस्मात्कार्यद्रव्यान्याशवशातो जीवप्रदेशानां परस्परं संबन्धविशेषतश्च वीर्यं जीवप्रदेशेषु केषुचित्प्रभूतमन्येषु स्तोकमपरेषु तु स्तोकतरमित्येवं वैषम्येणोपजायमानं न विरुध्यत इति ॥ ४ ॥

तदेवं वीर्यं प्रतिपाद्य संप्रत्यस्यैव जघन्याजघन्योत्कृष्टानुत्कृष्टत्वपरिज्ञापनाय प्ररूपणां चिकीर्षुरिमानर्थाधिकारानाह—

**अविभागवग्गफड्डुगअंतरठाणं अणंतरोवणिहा । जोगे परंपरावुड्ढिसमयजीवप्पबहुगं[10] च ॥ ५ ॥**

अविभागेति–योगे योगविषये । प्रथमतोऽविभागप्ररूपणा कार्या १ । ततो वर्गणाप्ररूपणा २ । ततः स्पर्धकस्य प्ररूपणा ३ । तदनन्तरमन्तरप्ररूपणा ४ । ततः स्थानप्ररूपणा ५ । ततोऽनन्तरोपनिधा ६ । ततः परंपरोपनिधा ७ । तदन-

---

१ एकप्रदेशावगाढौदारिकादिवर्गणाग्रहणवीर्यविचारोऽयमिति तूपाध्यायाः । परिश्रमवैचित्र्योपलब्धेः सर्वत्रैवमिति तु प्राञ्चः ।

लोकासंख्येयभागवर्त्यसंख्येयप्रतरगतप्रदेशराशिप्रमाणा वर्तन्ते, तेषां समुदायो द्वितीया वर्गणा । ततः परं द्वाभ्यां वीर्याविभागाभ्यामधिकानामुक्तसंख्याकानामेव जीवप्रदेशानां समुदायस्तृतीया वर्गणा । ततोऽपि त्रिभिर्वीर्याविभागैरधिकानां तावत्संख्याकानामेव जीवप्रदेशानां समुदायश्चतुर्थी वर्गणा । एवमेकैकवीर्याविभागवृद्ध्या वर्धमानानां तावतां तावतां जीवप्रदेशानां समुदायरूपा वर्गणा असंख्येया वक्तव्याः इति ॥ ७ ॥

ताश्च कियत्य इति तन्निरूपणार्थं स्पर्धकप्ररूपणामाह—

**सेढिअसंखिअमित्ता, फड्डगमेत्तो अणंतरा नत्थि । जाव असंखा लोगा, तो बीयाई य पुव्वसमा॥८॥**

सेढीति–इह घनीकृतस्य लोकस्य या एकैकप्रदेशपंक्तिरूपा श्रेणिस्तस्याः श्रेणेरसंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावन्मात्रास्तावत्प्रमाणा यथोक्तस्वरूपा वर्गणाः समुदिता एकं स्पर्धकं, स्पर्धन्त इवोत्तरोत्तरवृद्ध्या वर्गणा अत्रेति स्पर्धकं । कृद्दहुलमिति (श्रीम. कृ. १-११) वचनादधिकरणे वुञ् । उक्ता स्पर्धकप्ररूपणा, सांप्रतमन्तरप्ररूपणामाह—'एत्तो अणंतरा नत्थि' इतः पूर्वोक्तस्पर्धकगतचरमवर्गणायाः परतो जीवप्रदेशा अनन्तरा न सन्ति । किमुक्तं भवति ? इत ऊर्ध्वमेकैकवीर्याविभागवृद्ध्या निरन्तरं वर्धमाना जीवप्रदेशा न लभ्यन्ते, किं तु सान्तरा एव । तथाहि–पूर्वोक्तस्पर्धकगतचरमवर्गणायाः परतो जीवप्रदेशा नैकेन वीर्याविभागेनाधिकाः प्राप्यन्ते, नापि द्वाभ्यां, नापि त्रिभिः, नापि चतुर्भिः, यावन्नापि संख्येयैः, किं त्वसंख्येयैरेवासंख्येयलोकाकाशप्रदेशप्रमाणैरभ्यधिकाः प्राप्यन्ते । ततस्तेषां समुदायो द्वितीयस्य स्पर्धकस्य प्रथमा वर्गणा । 'तो बीयाई य पुव्वसम त्ति' ततो द्वितीयस्पर्धकप्रथमवर्गणातः परतो द्वितीयादयो

वर्गणाः पूर्वसमाः पूर्वस्पर्धकस्येव वक्तव्या इत्यर्थः । तथाहि—प्रथमवर्गणायाः परतो जीवप्रदेशानामेकेन वीर्याविभागेनाधिकानां समुदायो द्वितीया वर्गणा । द्वाभ्यां वीर्याविभागाभ्यामधिकानां समुदायस्तृतीया वर्गणा । एवं तावद्वाच्यं यावत् श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणा वर्गणा भवन्ति, तासां च समुदायो द्वितीयं स्पर्धकं । ततः परं पुनरप्येकेन वीर्याविभागेनाधिका जीवप्रदेशा न लभ्यन्ते, नापि द्वाभ्यां, नापि त्रिभिः, यावन्नापि संख्येयैः, किं त्वसंख्येयैरेवासंख्येयलोकाकाशप्रदेशप्रमाणैरभ्यधिकाः प्राप्यन्ते, ततस्तेषां समुदायस्तृतीयस्य स्पर्धकस्य प्रथमा वर्गणा । तत एकैकवीर्याविभागवृद्ध्या द्वितीयादयो वर्गणास्तावद्वाच्या यावच्छ्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणा भवन्ति, तासां च समुदायस्तृतीयं स्पर्धकं। एवमसंख्येयानि स्पर्धकानि वाच्यानीति ॥ ८ ॥

तदेवं कृताऽन्तरप्ररूपणा, संप्रति स्थानप्ररूपणां करोति—

**सेढिअसंखिअमेत्ताइं, फड्डगाइं जहन्नयं ठाणं । फड्डगपरिवुड्ढिअओ, अंगुलभागो असंखतमो ॥ ९ ॥**

सेढीति—इह पूर्वोक्तानि स्पर्धकानि श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि जघन्यं योगस्थानं भवन्ति । एतच्च सूक्ष्मनिगोदस्य सर्वाल्पवीर्यस्य भवप्रथमसमये वर्तमानस्य प्राप्यते । ततोऽन्यस्य जीवस्याधिकतरवीर्यस्य येऽल्पतरवीर्या जीवप्रदेशास्तेषां समुदायः प्रथमा वर्गणा । तत एकेन वीर्याविभागेन वृद्धानां समुदायो द्वितीया वर्गणा । द्वाभ्यां वीर्याविभागाभ्यामधिकानां समुदायस्तृतीया वर्गणा । त्रिभिर्वीर्याविभागैरधिकानां समुदायश्चतुर्थी वर्गणा । एवं तावद्वाच्यं यावच्छ्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणा भवन्ति । तासां समुदायः प्रथमं स्पर्धकं । ततः प्राक्तनयोगस्थानप्रदर्शितप्र-

कारेण द्वितीयादीन्यपि स्पर्धकानि वाच्यानि । तानि च तावद्वाच्यानि यावच्छ्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि भवन्ति, ततस्तेषां समुदायो द्वितीयं योगस्थानं । ततोऽन्यस्य जीवस्याधिकतमवीर्यस्योपदर्शितप्रकारेण तृतीयं योगस्थानं वाच्यं । एवमन्यान्यजीवापेक्षया तावद्योगस्थानानि वाच्यानि, यावत्सर्वोत्कृष्टं योगस्थानं भवति । इह द्वितीये योगस्थाने प्रथमे स्पर्धके प्रथमवर्गणायां जीवप्रदेशाः प्रथमयोगस्थानचरमस्पर्धकचरमवर्गणागतवीर्याविभागापेक्षया असंख्येयैर्वीर्याविभागैरधिकाः प्राप्यन्ते । तृतीयेऽपि योगस्थाने प्रथमस्पर्धके प्रथमवर्गणायां जीवप्रदेशा द्वितीययोगस्थानचरमस्पर्धकचरमवर्गणागतवीर्याविभागापेक्षयाऽसंख्येयैर्वीर्याविभागैरधिकाः प्राप्यन्ते । एवं सर्वेष्वपि द्रष्टव्यं । तानि च योगस्थानानि सर्वाण्यपि कियन्ति भवन्तीति चेदुच्यते—श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि । ननु जीवानामनन्तत्वात्प्रतिजीवं च योगस्थानस्य प्राप्यमाणत्वादनन्तानि योगस्थानानि प्राप्नुवन्ति, कथमुच्यते श्रेण्यसंख्येयभागगतप्रदेशप्रमाणानीति ? नैष दोषः, यत एकैकस्मिन् योगस्थाने सदृशे सदृशे वर्तमानाः स्थावरजीवा अनन्ताः प्राप्यन्ते । ततः सर्वजीवापेक्षयापि सर्वाणि योगस्थानानि केवलिप्रज्ञया परिभाव्यमानानि यथोक्तप्रमाणान्येव प्राप्यन्ते, नोना(ततो ना)धिकानीति । कृता स्थानप्ररूपणा, सांप्रतमनन्तरोपनिधावसरः । तत्रोपनिधानमुपनिधा । धातूनामनेकार्थत्वान्मार्गणमित्यर्थः । अनन्तरेणोपनिधा अनन्तरोपनिधा, अनन्तरं योगस्थानमधिकृत्योत्तरस्य योगस्थानस्य स्पर्धकविषये मार्गणमित्यर्थः । तदेवाह—सेढ्ढुगेत्यादि । अतः प्रथमाद्योगस्थानात् द्वितीयादिषु योगस्थानेषु प्रत्येकं स्पर्धकानां परिवृद्धिरंगुलभागोऽसंख्येयतमः, अंगुलमात्रक्षेत्रसत्केऽसंख्येयतमे भागे यावान् प्रदेशराशिस्तावत्प्रमाणानि पूर्वपूर्वयोगस्थानगतस्पर्धकापेक्षयोत्तरसिद्धत्त-

रस्मिन् योगस्थाने स्पर्धकान्यधिकानि भवन्तीत्यर्थः । कथमेवं ज्ञा(जा)यत इति चेदुच्यते–इह प्रथमयोगस्थानगतवर्गणापेक्षया द्वितीययोगस्थानगतवर्गणा मूलत एव सर्वा अपि हीनहीनतरजीवप्रदेशा भवन्ति, प्रभूतप्रभूततरवीर्याणां जीवप्रदेशानां स्तोकस्तोकतरतया प्राप्यमाणत्वात् । ततोऽत्र विचित्रवर्गणाबाहुल्यसंभवतो यथोक्तं स्पर्धकबाहुल्यमुपपद्यत एव । एवमुत्तरोत्तरेष्वपि योगस्थानेषु पूर्वपूर्वयोगस्थानगतस्पर्धकापेक्षया स्पर्धकबाहुल्यं परिभावनीयमिति ॥ ९ ॥

तदेवं कृताऽनन्तरोपनिधा, सांप्रतं परंपरोपनिधाया अवसरः, तत्र परंपराया उपनिधा मार्गणं परंपरोपनिधा, तां चिकीर्षुराह—

सेढिअसंखियभागं, गंतुं गंतुं हवंति दुगुणाइं । पल्लासंखियभागो, नाणागुणहाणिठाणाणि ॥ १० ॥

सेढीति-प्रथमाद्योगस्थानादारभ्य श्रेणेरसंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावन्मात्राणि योगस्थानानि गत्वा गत्वाऽतिक्रम्यातिक्रम्य यद्यत्परं योगस्थानं तत्र तत्र पूर्वयोगस्थानापेक्षया स्पर्धकानि द्विगुणानि भवन्ति । एतदुक्तं भवति–प्रथमे योगस्थाने यावन्ति स्पर्धकानि भवन्ति तदपेक्षया श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि योगस्थानान्यतिक्रम्यानन्तरे योगस्थाने द्विगुणानि स्पर्धकानि भवन्ति । ततः पुनरपि ततो योगस्थानात्परतस्तावन्ति योगस्थानान्युल्लंघ्यापरस्मिन् योगस्थाने द्विगुणानि स्पर्धकानि प्राप्यन्ते । एवं भूयो भूयस्तावद्वाच्यं यावदन्तिमं योगस्थानं । कियन्ति पुनर्योगस्थानानि पूर्वपूर्वयोगस्थानापेक्षया द्विगुणद्विगुणस्पर्धकानि भवन्त्यत आह–'पल्लासंखियभागो त्ति' सूक्ष्मस्याद्धापल्योपमस्यासंख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणानि द्विगुणवृद्धिस्थानानि भवन्ति । 'नाणागुणहाणिठाणाणि त्ति'

नानारूपाणि यानि गुणहानिस्थानानि द्विगुणहानिस्थानानि तान्यपि पल्योपमासंख्येयभागगतसमयप्रमाणानि भवन्ति । तथाहि–उत्कृष्टाद्योगस्थानादारभ्याधोऽधोऽवतरणे सति यदा श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि योगस्थानान्युल्लंघितानि भवन्ति, तदाऽनन्तरेऽधस्तने योगस्थानेऽन्तिमयोगस्थानगतस्पर्धकापेक्षयाऽर्धानि स्पर्धकानि प्राप्यन्ते । ततः पुनरपि श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणेषु योगस्थानेष्वतिक्रान्तेष्वधस्तने योगस्थानेऽर्धानि प्राप्यन्ते । एवं तावद्वाच्यं यावज्जघन्यं योगस्थानमिति द्विगुणवृद्धिस्थानतुल्यानि द्विगुणहानिस्थानानि । यानि चामूनि द्विगुणवृद्धिस्थानानि द्विगुणहानिस्थानानि वा तानि सर्वस्तोकानि । तेभ्यः पुनरेकस्मिन् द्विगुणवृद्धिस्थानयोर्द्विगुणहानिस्थानयोर्वाऽन्तरे यानि योगस्थानानि तान्यसंख्येयगुणानि इति ॥ १० ॥

तदेवं कृता परंपरोपनिधा, सांप्रतं वृद्धिप्ररूपणां चिकीर्षुराह—

**वुड्ढीहाणिचउक्कं तम्हा कालोत्थ अंतिमल्लीणं । अंतोमुहुत्तमावलि असंखभागो य सेसाणं ॥ ११ ॥**

वुड्ढीति–क्षयोपशमो हि वीर्यान्तरायस्य क्वचित्कदाचित्कथंचिद्भवतीति तन्निबन्धनानि योगस्थानानि कदाचित्प्रवर्धमानानि भवन्ति कदाचिद्धीयमानानि । तत्र वृद्धिश्चतुर्धा, तद्यथा–असंख्येयभागवृद्धिः, संख्येयभागवृद्धिः, संख्येयगुणवृद्धिः, असंख्येयगुणवृद्धिः । एवं हानिरपि चतुर्धा, तद्यथा–असंख्येयभागहानिः, संख्येयभागहानिः, संख्येयगुणहानिः असंख्येयगुणहानिः । यस्मादेवं वृद्धिहान्योश्चतुष्कं वर्तते तस्मादत्र प्रत्येकं कालो नियतो वक्तव्यः । तत्रान्तिमयोर्वृद्धिहान्योरसंख्येयगुणलक्षणयोः प्रत्येकं 'कालो त्ति' अन्तर्मुहूर्तं । शेषाणां त्वाद्यानां तिसृणां वृद्धीनां हानीनां

चावलिकाया असंख्येयभागमात्रः। एतदुक्तं भवति–तथाविधक्षयोपशमभावतो विवक्षितात् योगस्थानात् प्रतिसमय-मपरस्मिन्नपरस्मिन्नसंख्येयगुणवृद्धे योगस्थाने यद्वर्तते जीवः साऽसंख्येयगुणवृद्धिः। यत्पुनः क्षयोपशमस्य मन्दमन्दत-मभावतः प्रतिसमयमपरस्मिन्नसंख्येयगुणहीने योगस्थाने वर्तते साऽसंख्येयगुणहानिः। सा चासंख्येयगुणवृद्धिरसंख्ये-यगुणहानिर्वोत्कर्षतोऽन्तर्मुहूर्तं कालं यावन्निरन्तरं भवति। आद्याः पुनस्तिस्रो वृद्धयो हानयो वोत्कर्षत आवलिकाया असंख्येयभागमात्रं कालं, जघन्यतस्तु चतस्रोऽप्येकं द्वौ वा समयौ यावद्भवन्ति ॥ ११ ॥

स्यादेतत्, कियन्तं कालं यावत्पुनर्यथोक्तवृद्धिहानिरहिता जीवा योगस्थानेष्ववस्थिताः प्राप्यन्त इति प्रश्नावका-शमाशंक्य समयप्ररूपणामाह—

**चउराई जावट्ठगमित्तो जाव दुगं ति समयाणं। पज्जत्तजहन्नाओ जावुक्कोसं ति उक्कोसो ॥ १२ ॥**

चउराईति–चत्वार आदिर्यस्याः सा चतुरादिः समयानामवस्थितिकालनियामकानां वृद्धिः, सा च तावद्वाच्या यावदष्टकं। इत ऊर्ध्वं पुनः समयानां हानिर्वक्तव्या, सा च तावद्यावद्द्विकं। सा च चतुरादिका वृद्धिः 'पर्याप्तजघन्यात्' पर्याप्तसूक्ष्मनिगोदसत्कजघन्ययोगस्थानादारभ्य तावदवसेया यावदष्टकं। ततः परं हानिः, सापि तावद्यावदुत्कृष्टं योग-स्थानं। एष उत्कृष्टोऽवस्थितिकालः। एतदुक्तं भवति–पर्याप्तसूक्ष्मनिगोदस्य सर्वाल्पवीर्यस्य सत्काज्जघन्याद्योगस्थाना-दारभ्य क्रमेण यानि योगस्थानानि श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि तान्युत्कर्षतश्चतुरः समयान् यावदवस्थि-तानि प्राप्यन्ते। ततः परं यानि योगस्थानानि श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि तान्युत्कर्षतः पञ्च समयान्।

ततः परं यानि योगस्थानानि पूर्वोक्तप्रमाणानि तान्युत्कर्षतः षट् समयान् । ततोऽपराणि यानि योगस्थानानि पूर्वोक्त-प्रमाणानि तान्युत्कर्षतः सप्त समयान् । ततोऽपि पराणि यानि क्रमेण योगस्थानानि पूर्वोक्तसंख्याकानि तान्युत्कर्ष-तोऽष्टौ समयान् । ततः पराणि पुनर्यानि क्रमेण योगस्थानानि श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणान्येव तान्युत्कर्षतः सप्त समयान् यावदवस्थितानि प्राप्यन्ते । तदनन्तरं यथोक्तसंख्याकान्येव योगस्थानान्युत्कर्षतः षट् समयान् । ततोऽपि पराणि यथोक्तप्रमाणान्येव योगस्थानानि पञ्च समयान् । एवं तावद्वाच्यं यावदन्तिमानि श्रेण्यसंख्येयभागगतप्रदेशराशि-प्रमाणान्युत्कर्षतो द्वौ समयौ यावदवस्थितानि प्राप्यन्ते ॥ १२ ॥

तदेवमुक्तमुत्कृष्टमवस्थानकालमानं, सांप्रतं जघन्यमवस्थानकालमानमाह–

**एगसमयं जहन्नं ठाणाणप्पाणि अट्ठ समयाणि । उज्जउ असंखगुणियाणि समयसो ऊण ठाणाणि ॥ १३ ॥**

*एगेति*–सर्वेषामुक्तस्वरूपाणां योगस्थानानां जघन्यत एकसमयं यावदवस्थानं । तथा यान्यप्यपर्याप्तसूक्ष्मनिगोदयोग्या-न्यसंख्येयानि योगस्थानानि पूर्वमनुक्तकालनियमानि तेषां जघन्यत उत्कर्षतो वा एकं समयं यावदवस्थानं । यतः सर्वोऽ-प्यपर्याप्तोऽपर्याप्तावस्थायां वर्तमानः प्रतिसमयमसंख्येयगुणरूपया योगवृद्ध्या वर्धते, ततस्तद्योगस्थानानामजघन्योत्कृष्ट-मेकमेव समयं यावदवस्थानं । तदेवमुक्ता समयप्ररूपणा, सांप्रतमेतेषामेव चतुरादिसमयानां योगस्थानानामल्पबहुत्वमाह–*ठाणाणीत्यादि* । अष्टसामयिकानि *स्थानानि योगस्थानानि*, (*अल्पानि शेष*) सप्तसामयिकादियोगस्थानानि प्रतीत्य स्तोका-न्येव प्राप्यन्ते इति कृत्वा, तेभ्यः प्रत्येकसमयमसंख्येयगुणानि पूर्वोत्तररूपोभयपार्श्ववर्तीनि सप्तसामयिकानि, अल्पत-

रस्थितिकत्वात् । स्वस्थाने तु तानि द्वयान्यपि परस्परं तुल्यानि । तेभ्योऽप्यसंख्येयगुणानि उभयपार्श्ववर्तीनि षट्सामयिकानि, स्वस्थाने तु परस्परं तुल्यानि । तेभ्योऽप्यसंख्येयगुणानि पञ्चसामयिकानि उभयपार्श्ववर्तीनि, स्वस्थाने तु परस्परं तुल्यानि । तेभ्योऽप्यसंख्येयगुणानि चतुःसामयिकानि उभयपार्श्ववर्तीनि स्वस्थाने तु परस्परं तुल्यानि । तेभ्योऽप्यसंख्येयगुणानि त्रिसामयिकानि, तेभ्योऽप्यसंख्येयगुणानि द्विसामयिकानि । 'समयसो ऊण ठाणाणि त्ति' समयशः समयेन समयेन ऊनानि अष्टसामयिकेभ्यो व्यतिरिक्तानि सप्तसामयिकादीनि स्थानानि योगस्थानानि ॥ १३ ॥

तदेवमुक्तं चतुरादिसमयानां योगस्थानानामल्पबहुत्वं, संप्रति तेषु योगस्थानेषु वर्तमानानां सूक्ष्मबादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियाणां पर्याप्तापर्याप्तानां जघन्योत्कृष्टयोगविषयेऽल्पबहुत्वमभिधित्सुराह—

**सव्वत्थोवो जोगो साहारणसुहुमपढमसमयम्मि । बायरबियतियचउरमणसन्नपज्जत्तगजहन्नो ॥ १४ ॥**

सव्वेति—इहासंख्येयगुण इति उत्तरगाथातः संबध्यते । साधारणस्य सूक्ष्मस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगः सर्वस्तोकः । ततो बादरैकेन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः। ततो द्वीन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः । ततस्त्रीन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः । ततश्चतुरिन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः । ततोऽसंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः । ततः संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः ॥ १४ ॥

आइदुगुक्कोसो सिं पज्जत्तजहन्नगेयरे य कमा। उक्कोसजहन्नियरो असमत्तियरे असंखगुणो ॥ १५ ॥

आईति-आदिद्विकमपर्याप्तसूक्ष्मबादरैकेन्द्रियलक्षणं तस्योत्कृष्टो योगः परिपाट्याऽसंख्येयगुणो वक्तव्यः । तद्यथा-लब्ध्यपर्याप्तकसंज्ञिपञ्चेन्द्रियजघन्ययोगात् सूक्ष्मनिगोदस्य लब्ध्यपर्याप्तकस्यैवोत्कृष्टो योगोऽसंख्येयगुणः । ततोऽपि बादरैकेन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टोऽसंख्येयगुणः । 'सिं पज्जत्तजहन्नगेयरे य कमा' अनयोः सूक्ष्मबादरैकेन्द्रिययोः पर्याप्तयोर्जघन्य इतरश्चोत्कृष्टः । क्रमात् क्रमेणासंख्येयगुणो वक्तव्यः । तद्यथा-लब्ध्यपर्याप्तकबादरैकेन्द्रियोत्कृष्टयोगात् सूक्ष्मनिगोदस्य पर्याप्तस्य जघन्यो योगोऽसंख्येयगुणः । ततो बादरैकेन्द्रियस्य पर्याप्तकस्य जघन्ययोगोऽसंख्येयगुणः । ततः सूक्ष्मनिगोदस्य पर्याप्तस्योत्कृष्टो योगोऽसंख्येयगुणः । ततोऽपि बादरैकेन्द्रियस्य पर्याप्तस्योत्कृष्टो योगोऽसंख्येयगुणः । 'उक्कोसजहन्नियरो असमत्तियरे असंखगुणो त्ति' असमाप्तोऽपर्याप्तो द्वीन्द्रियादिस्तस्मिन्नुत्कृष्ट इतरस्मिंश्च पर्याप्ते द्वीन्द्रियादौ जघन्य इतरश्चोत्कृष्टः परिपाट्याऽसंख्येयगुणो वक्तव्यः । तद्यथा-पर्याप्तकबादरैकेन्द्रियोत्कृष्टयोगात् द्वीन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः । ततस्त्रीन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः । ततश्चतुरिन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः । ततोऽसंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः । ततोऽपि संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः । ततो द्वीन्द्रियस्य पर्याप्तकस्य जघन्यो योगोऽसंख्येयगुणः । ततस्त्रीन्द्रियस्य पर्याप्तकस्य जघन्यो योगोऽसंख्येयगुणः । ततश्चतुरिन्द्रियस्य पर्याप्तकस्य जघन्यो योगोऽसंख्येयगुणः । ततोऽसंज्ञिपञ्चेन्द्रियस्य पर्याप्तकस्य जघन्यो योगोऽसंख्येयगुणः । ततः संज्ञिपञ्चेन्द्रियस्य पर्याप्त-

कस्य जघन्यो योगोऽसंख्येयगुणः। ततो द्वीन्द्रियस्य पर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः। ततस्त्रीन्द्रियस्य पर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः। ततोऽपि चतुरिन्द्रियस्य पर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः। पर्याप्तकाश्च सर्वत्रापि करणपर्याप्ता वेदितव्याः ॥ १५ ॥

**अमणाणुत्तरगेविज्जभोगभूमिगय तइयतणुगेसुं। कमसो असंखगुणिओ सेसेसु य जोगु उक्कोसा ॥ १६ ॥**

अमणेति–'अमण त्ति' अमना असंज्ञी पर्याप्तचतुरिन्द्रियोत्कृष्टयोगात् असंज्ञिपञ्चेन्द्रियपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः। ततोऽनुत्तरोपपातिनां देवानामुत्कृष्टो योगोऽसंख्येयगुणः। ततो ग्रैवेयकाणां देवानामुत्कृष्टो योगोऽसंख्येयगुणः। ततो भोगभूमिजा(गता)नां तिर्यङ्मनुष्याणामुत्कृष्टो योगोऽसंख्येयगुणः। ततोऽप्याहारकशरीरिणामुत्कृष्टो योगोऽसंख्येयगुणः। ततः शेषाणां देवनारकतिर्यङ्मनुष्याणामुत्कृष्टो योगोऽसंख्येयगुणः। असंख्येयगुणकारश्च सर्वत्रापि सूक्ष्मक्षेत्रपल्योपमासंख्येयभागगतप्रदेशराशिप्रमाणो द्रष्टव्यः। 'तइयतणुगेसुन्ति' तृतीया तनुराहारकशरीरं ॥१६॥

तदेवं कृता सप्रपञ्चं योगप्ररूपणा, सांप्रतमेभिर्योगैर्यत्करोति तदाह—

**जोगेहिं तयणुरूवं परिणमइ गिण्हिऊण पंच तणू। पाउग्गे वालंबइ भासाणुमणत्तणे खंधे ॥ १७ ॥**

जोगेहिं ति–योगैरनन्तरोक्तस्वरूपैः प्रायोग्यान् स्कन्धान् पुद्गलस्कन्धान् गृहीत्वा यथायोगं। 'पंचतणु त्ति' पञ्च शरीराणि परिणमयति औदारिकादिपञ्चशरीरतया परिणमयतीत्यर्थः। कथं पुनर्गृह्णातीति चेदत आह–तदनुरूपं योगानुरूपं। तथाहि–जघन्ययोगे वर्तमानः स्तोकान् पुद्गलस्कन्धान् गृह्णाति, मध्यमे मध्यमान्, उत्कृष्टे च योगे वर्तमानः

प्रभूतानिति । उक्तं चान्यत्रापि-" जोगणुरूवं जीवा परिणामंतीह गिण्हिउं दलियन्ति " । अथवा तच्छब्देन पञ्च शरीराणि संबध्यन्ते । ततश्च तदनुरूपं पञ्चशरीरानुरूपं शरीरपञ्चकप्रायोग्यतयेत्यर्थः । पुद्गलस्कन्धान् गृह्णाति । तथा चापाप्राणापानमनस्त्वप्रायोग्यान् पुद्गलस्कन्धान् प्रथमतो गृह्णाति । गृहीत्वा च आपादित्वेन परिणमयति । परिणमय्य च तन्निसर्गहेतुसामर्थ्यविशेषसिद्धये तान् पुद्गलस्कन्धानालंबते । ततस्तदवष्टंभतो जातसामर्थ्यविशेषः सन् विसृजति, नान्यथा । तथाहि-यथा वृषदंशः स्वान्यंगान्यूर्ध्वं गमनाय प्रथमतः संकोचव्याजेनावलंबते, ततस्तदवष्टंभतो जातसामर्थ्यविशेषः सन् तान्यंगान्यूर्ध्वं प्रक्षिपति, नान्यथा शक्नोति, द्रव्यनिमित्तं वीर्यं संसारिणामुपजायत इति वचनप्रामाण्यात्, तथेहापि भावनीयमिति ॥ १७ ॥

ननु जीवो योगैस्तदनुरूपपुद्गलस्कन्धान् गृह्णाति आलंबते चेत्युक्तं, तत्र के पुद्गला ग्रहणप्रायोग्याः, के चाग्रहणप्रायोग्या इति विनेयजनप्रश्नावकाशमाशंक्य ग्रहणाग्रहणप्रायोग्याः पुद्गलवर्गणाः प्ररूपयति—

परमाणुसंखऽसंखाऽणंतपएसा अभवणंतगुणा । सिद्धाणणंतभागो आहारगवग्गणा तितणू ॥ १८ ॥
अग्गहणंतरियाउ तेयगभासामणे य कम्मे य । धुवअधुवअच्चित्तासुन्नाचउअंतरेसुप्पिं ॥ १९ ॥
पत्तेगतणुसु बायरसुहुमनिगोए तहा महाखंधे । गुणनिप्फन्नसनामो असंखभागंगुलवगाहो ॥ २० ॥

परमाणु त्ति-एकैकपरमाणुरूपास्तथा संख्यातानां परमाणूनामसंख्यातानामनन्तानां च परमाणूनां समुदायरूपा वर्गणा

भवन्ति । तत्रैकैकपरमाणवः परमाणुवर्गणा । इह वर्गणाशब्दः समुदायवाची । तत एकैकस्मिन् परमाणौ वर्गणाशब्दोऽनेकपर्यायोपनिपातापेक्षया द्रष्टव्यः । यदि पुनः परमाणूनां वर्गणा परमाणुवर्गणेत्युच्येत, तर्हि जगति ये केचन परमाणवस्तेषां समुदायः परमाणुवर्गणेत्यापद्येत । तथा च सति " असंखभागंगुलवगाहो " इति विरुध्येत, एकैकपरमाणूनां सर्वलोकगतत्वात् । तथा द्वयोः परमाण्वोः समुदायो द्विप्रदेशस्कन्धवर्गणाः । त्रयाणां परमाणूनां समुदायस्त्रिप्रदेशस्कन्धवर्गणाः । चतुर्णां परमाणूनां समुदायश्चतुःप्रदेशस्कन्धवर्गणाः । एवं तावद्वाच्यं यावत्संख्येया वर्गणा भवन्ति । असंख्यातानां च परमाणूनां समुदायरूपा असंख्येया वर्गणा वाच्याः, असंख्यातस्यासंख्यातभेदात्मकत्वात् । ततोऽनन्तानां परमाणूनां समुदायरूपा अनन्ता वर्गणा वाच्याः, अनन्तस्यानन्तभेदात्मकत्वात् । एताश्च मूलत आरभ्य सर्वा अपि जीवानामल्पपरमाणुतया स्थूलपरिमाणत्वेन चाग्रहणप्रायोग्याः अनन्तानन्तानां च परमाणूनां समुदायरूपाः काश्चिद्ग्रहणप्रायोग्याः काश्चिदग्रहणप्रायोग्याः । तत्राभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा ये परमाणवस्तत्समुदायात्मकाः स्कन्धाः । ' आहारगवग्गण त्ति ' आहरणं आहारः ग्रहणमित्यर्थः । आहार एवाहारकः, तत्प्रायोग्या वर्गणा आहारकवर्गणा भवन्ति, ग्रहणप्रायोग्या वर्गणा भवन्तीत्यर्थः । किंविषया इत्यत आह–' तितणू इति ', औदारिकवैक्रियाहारकरूपतनुत्रयविषये ग्रहणप्रायोग्या वर्गणा अग्रहणान्तरिता अग्रहणप्रायोग्यवर्गणान्तरिताः । तथा तैजसभाषाप्राणापानमनःकर्मणि च विषयेऽग्रहणप्रायोग्यवर्गणान्तरिता ग्रहणप्रायोग्या वर्गणा भवन्ति । तथाहि–अभव्या-

१ वर्गणायोग्यत्वमादायेति न्यायाचार्योपाध्यायाः

नन्तगुणसिद्धानन्तभागकल्पपरमाणुसमुदायरूपा वर्गणा औदारिकशरीरनिष्पादनाय ग्रहणप्रायोग्या भवति । सा च जघन्या । तत एकपरमाण्वधिकस्कन्धरूपा द्वितीया ग्रहणप्रायोग्या वर्गणा । द्विपरमाण्वधिकस्कन्धरूपा तृतीया ग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वाच्या यावदुत्कृष्टा औदारिकशरीरग्रहणप्रायोग्या वर्गणा भवति । जघन्यायाश्च वर्गणायाः सकाशादुत्कृष्टा वर्गणा विशेषाधिका । विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः । औदारिकशरीरग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा वर्गणाऽग्रहणप्रायोग्या, सा जघन्या । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वाच्या यावदुत्कृष्टाऽग्रहणप्रायोग्या वर्गणा भवति । जघन्यायाश्च वर्गणायाः सकाशादुत्कृष्टा वर्गणा अनन्तगुणाः। गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः । एतासां चाग्रहणप्रायोग्यता औदारिकं प्रति प्रभूतपरमाणुनिष्पन्नत्वात् सूक्ष्मपरिमाणत्वाच्च वेदितव्या । वैक्रियं प्रति पुनः स्वल्पपरमाण्वारमकत्वात् स्थूलपरिमाणत्वाच्चावसेया । एवमुत्तरत्रापि भावना कार्या । अग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा वर्गणा वैक्रियशरीरप्रायोग्या जघन्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया वैक्रियशरीरस्य ग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणा वैक्रियशरीरविषये ग्रहणप्रायोग्यास्तावद्वक्तव्या यावदुत्कृष्टा ग्रहणप्रायोग्या वर्गणा भवति । जघन्यायाश्चोत्कृष्टा विशेषाधिकाः । विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः । वैक्रियशरीरोत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा जघन्याऽग्रहणप्रायोग्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा

द्वितीयाऽग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टाऽग्रहणप्रायोग्या वर्गणा । जघन्यायाश्चोत्कृष्टा वर्गणा अनन्तगुणाः । गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः । तत उत्कृष्टाग्रहणप्रायोग्यवर्गणापेक्षया एकपरमाण्वधिकस्कन्धरूपा वर्गणा आहारकशरीरप्रायोग्या जघन्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया आहारकशरीरविषये ग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा आहारकशरीरविषये ग्रहणप्रायोग्या वर्गणास्तावद्वाच्या यावदुत्कृष्टा ग्रहणप्रायोग्या वर्गणा भवति । जघन्यायाश्चोत्कृष्टा विशेषाधिका । विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः । आहारकशरीरप्रायोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपाऽग्रहणप्रायोग्या जघन्यवर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टाऽग्रहणप्रायोग्या वर्गणा भवति । जघन्यायाश्चोत्कृष्टाऽनन्तगुणा । गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः । 'इह चूर्णिकृदादयः औदारिकवैक्रियाहारकशरीरप्रायोग्याणां वर्गणानामपान्तराले ग्रहणवर्गणा नेच्छन्ति, परं जिनभद्रगणिक्षमाश्रमणादिभिरिष्यन्त इति तन्मतेनोक्ताः' । आहारकशरीराग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा वर्गणा तैजसशरीरप्रायोग्या जघन्या वर्गणा भवति । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया तैजसशरीरप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपास्तैजसशरीरविषये ग्रहणप्रायोग्यवर्गणास्तावद्वक्तव्या यावदुत्कृष्टा ग्रहणप्रायोग्या वर्गणा भवति । जघन्यायाश्चोत्कृष्टा विशेषाधिका । विशेषश्च तस्या

एव जघन्याया अनन्ततमो भागः । तैजसशरीरप्रायोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा जघन्याऽग्रहणप्रायोग्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टाऽग्रहणप्रायोग्या वर्गणा । जघन्यायाश्चोत्कृष्टाऽनन्तगुणा । गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः । अग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा जघन्या भाषाप्रायोग्या वर्गणा । यानि पुद्गलद्रव्याणि गृहीत्वा जन्तवः सत्यादिभाषारूपतया परिणमय्यालंब्य च विसृजन्ति, तानि भाषाप्रायोग्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया भाषाप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा भाषाप्रायोग्यास्तावद्वक्तव्या यावदुत्कृष्टा भाषाप्रायोग्या वर्गणा भवति । जघन्यायाश्चोत्कृष्टा विशेषाधिका । विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः । उत्कृष्टभाषाप्रायोग्यवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा जघन्याऽग्रहणप्रायोग्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टाऽग्रहणप्रायोग्या वर्गणा । जघन्यायाश्चोत्कृष्टाऽनन्तगुणा । गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः । अग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा जघन्या प्राणापानयोग्या वर्गणा । यानि पुद्गलद्रव्याणि गृहीत्वा जन्तवः प्राणापानरूपतया परिणमय्यालंब्य च विसृजन्ति तानि प्राणापानयोग्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया प्राणापानयोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपाः प्राणापानयोग्या वर्गणास्तावद्वक्तव्या

यावडुत्कृष्टा प्राणापानयोग्या वर्गणा जवति । जघन्यायाश्चोत्कृष्टा विशेषाधिका । विशेषश्च तस्या एव जघन्याया अनन्ततमो जागः । प्राणापानयोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा जघन्याऽग्रहणप्रायोग्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावडुत्कृष्टाऽग्रहणप्रायोग्या वर्गणा जवति । जघन्यायाश्चोत्कृष्टाऽनन्तगुणा । गुणकारश्चाजव्यानन्तगुणसिद्धानन्तजागकल्पराशिप्रमाणो डष्टव्यः । ततोऽग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया एकपरमाण्वधिकस्कन्धरूपा मनःप्रायोग्या जघन्या वर्गणा । इह यानि पुजलद्रव्याणि जन्तवः सत्यादिमनोरूपतया परिणमय्यालंब्य च विसृजन्ति, तानि मनःप्रायोग्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया मनःप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा मनःप्रायोग्या वर्गणास्तावद्वाच्या यावडुत्कृष्टा मनःप्रायोग्या वर्गणा जवति । जघन्यायाश्चोत्कृष्टा विशेषाधिका । विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो जागः । तत उत्कृष्टमनःप्रायोग्यवर्गणापेक्षया एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्याऽग्रहणप्रायोग्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वाच्या यावडुत्कृष्टाऽग्रहणप्रायोग्या वर्गणा । जघन्यायाश्चोत्कृष्टाऽनन्तगुणा । गुणकारश्चाजव्यानन्तगुणसिद्धानन्तजागकल्पराशिप्रमाणो डष्टव्यः । ततोऽग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षयैकपरमाण्वधिकस्कन्धरूपा कर्मप्रायोग्या जघन्या वर्गणा । इह यानि पुजलद्रव्याणि जन्तवो ज्ञानावरणीयादिरूपतया परिणमयन्ति, तानि कर्मप्रायोग्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया कर्मप्रायोग्या

वर्गणा.। एवमेकैकपरमाण्वधिकस्कन्धरूपाः कर्मप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा कर्मप्रायो[illegible]
जघन्यायाश्चोत्कृष्टा विशेषाधिका। विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः। 'भासामणे य' इत्यत्र चशब्दस्यानुक्तसमुच्चयार्थत्वाद् भाषावर्गणानन्तरमग्रहणवर्गणान्तरिताः प्राणापानवर्गणा द्रष्टव्याः। ताश्च भाविता एव। 'कम्मे य' इत्यत्र चशब्दः समुच्चये। इदानीमेतासामेवौदारिकादिप्रायोग्यवर्गणानां वर्णादि निरूप्यते-तत्रौदारिकशरीरप्रायोग्या वर्गणा अनन्तानन्तपरमाण्वात्मकाः पञ्चवर्णा द्विगन्धाः पंचरसा अष्टस्पर्शाश्च। एवं वैक्रियाहारकशरीरप्रायोग्या अपि वर्गणा द्रष्टव्याः। तैजसशरीरप्रायोग्या वर्गणाः पञ्चवर्णा द्विगन्धाः पञ्चरसाश्चतुःस्पर्शाः। तत्र मृदुलघुरूपौ द्वौ स्पर्शाववस्थितौ, अन्यौ तु द्वौ स्पर्शौ स्निग्धोष्णौ स्निग्धशीतौ रूक्षोष्णौ रूक्षशीतौ वा। एवं भाषाप्राणापानमनः-कर्मप्रायोग्या अपि वर्गणा द्रष्टव्याः। तत्रौदारिकवर्गणाः प्रदेशार्थतया सर्वस्तोकाः। ताभ्यो वैक्रियशरीरप्रायोग्या वर्गणा अनन्तगुणाः। ताभ्य आहारकशरीरप्रायोग्या वर्गणा अनन्तगुणाः। ताभ्योऽपि तैजसशरीरप्रायोग्या वर्गणा अनन्तगुणाः। एवं भाषाप्राणापानमनःकर्मप्रायोग्या अपि वर्गणा यथोत्तरमनन्तगुणा वाच्याः। 'धुवअधुवेत्यादि' कर्मप्रायोग्योत्कृष्टवर्गणानन्तरं ध्रुवाचित्तजघन्यवर्गणास्तदनन्तरं चाध्रुवाचित्तवर्गणाः। ततः 'सुन्ना चउ त्ति' चतस्रो ध्रुवशून्यवर्गणाः। तासां च चतसृणां ध्रुवशून्यवर्गणानामन्तरे उपरिष्टात् प्रत्येकतनुषु बादरसूक्ष्मनिगोदे (द्वयोः) महास्कन्धे च वर्गणा यथासंख्यं भवन्ति। तद्यथा-प्रथमध्रुवशून्यवर्गणाया उपरि प्रत्येकशरीरवर्गणा, द्वितीयध्रुवशून्यवर्गणायां उपरि बादरनिगोदवर्गणा, तृतीयध्रुवशून्यवर्गणाया उपरि सूक्ष्मनिगोदवर्गणा, चतुर्थध्रुवशून्यवर्गणाया उपरि महास्कन्ध-

वर्गणा। तत्र कर्मप्रायोग्योत्कृष्टवर्गणानन्तरमेकपरमाण्वधिकस्कन्धरूपा जघन्या ध्रुवाचित्तद्रव्यवर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया ध्रुवाचित्तद्रव्यवर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपा ध्रुवाचित्तद्रव्यवर्गणास्तावद्वक्तव्या यावदुत्कृष्टा ध्रुवाचित्तद्रव्यवर्गणा। ध्रुवाचित्तद्रव्यवर्गणा नाम याः सर्वदैव लोके प्राप्यन्ते। तथाहि—एतासां मध्येऽन्या उत्पद्यन्तेऽन्या विनश्यन्ति, न पुनरेताभिः कदाचनापि लोको विरहितो भवति। अचित्तत्वं चासां जीवेन कदाचनापि अग्रहणादवसेयं। जीवसंबन्धाद्धि सचित्तत्वमपि कथञ्चित् स्यात् यथौदारिकादिशरीराणामिति। जघन्यायाश्च वर्गणायाः सकाशादुत्कृष्टा वर्गणा अनन्तगुणाः। गुणकारश्च सर्वजीवानन्तगुणराशिप्रमाणो द्रष्टव्यः। तत एकपरमाण्वधिकस्कन्धरूपा जघन्याऽध्रुवाचित्तद्रव्यवर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽध्रुवाचित्तद्रव्यवर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपा अध्रुवाचित्तद्रव्यवर्गणास्तावद्वाच्या यावदुत्कृष्टाऽध्रुवाचित्तद्रव्यवर्गणा भवति। अध्रुवाचित्तद्रव्यवर्गणा नाम यासां मध्ये काश्चिद्वर्गणाः कदाचिल्लोके भवन्ति, कदाचिच्च न भवन्ति। अत एवैताः सान्तरनिरन्तरा अप्युच्यन्ते। जघन्यायाश्च वर्गणायाः सकाशादुत्कृष्टा वर्गणाऽनन्तगुणा। गुणकारश्च सर्वजीवानन्तगुणराशिप्रमाणो द्रष्टव्यः। तत एकपरमाण्वधिकस्कन्धरूपा जघन्या प्रथमध्रुवशून्यवर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया प्रथमध्रुवशून्यवर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपाः प्रथमध्रुवशून्यवर्गणास्तावद्वक्तव्या यावदुत्कृष्टा प्रथमध्रुवशून्यवर्गणा भवति। ध्रुवशून्य-

१ भिन्नक्रमः कथञ्चिदित्यस्मादग्रे योज्यश्च। यद्वा यथौदारिकादिशरीराणां जीवसंबंधात्कथंचित्सचित्तत्वमस्ति तथा भवेदासामपि, परं नैवास्त्यासाभिर्जीवसंबन्ध इत्यचित्ता एवैताः, कथंचित्सचित्तता तु स्वरूपतोऽचित्तत्वादौदारिकादिशरीराणाम्।

वर्गणा नाम याः कदाचनापि लोके न भवन्ति। केवलमुपरितनवर्गणानां बाहुल्यपरिज्ञानार्थं प्ररूपणामात्रमेव क्रियते । जघन्यायाश्च वर्गणायाः सकाशादुत्कृष्टा वर्गणाऽनन्तगुणा । गुणकारश्च सर्वजीवानन्तगुणराशिप्रमाणो द्रष्टव्यः । तत एकपरमाण्वधिकस्कन्धरूपा जघन्या प्रत्येकशरीरिद्रव्यवर्गणा। अथ केयं प्रत्येकशरीरिद्रव्यवर्गणा नाम? उच्यते–प्रत्येकशरीरिणां यथासंभवमौदारिकवैक्रियाहारकतैजसकार्मणेषु शरीरनामकर्मसु ये प्रत्येकं विश्रसापरिणामेनोपचयमापन्नाः सर्वजीवानन्तगुणाः पुद्गलास्ते प्रत्येकशरीरिद्रव्यवर्गणा। तत एकपरमाण्वधिकस्कन्धरूपा द्वितीया प्रत्येकशरीरिद्रव्यवर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपाः प्रत्येकशरीरिद्रव्यवर्गणास्तावद्वाच्या यावदुत्कृष्टा प्रत्येकशरीरिद्रव्यवर्गणा भवति। जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा । गुणकारश्च सूक्ष्मक्षेत्रपल्योपमासंख्येयभागलक्षणः । कथमेतदवसीयत इति चेदुच्यते–इह सर्वोऽपि कर्मप्रदेशोपचयो योगाद्भवति, 'जोगा पयडिपएसं' इति वचनात् । ततो जघन्ये योगे सति जघन्यः कर्मप्रदेशोपचयो भवति, उत्कृष्टे चोत्कृष्टः । जघन्याच्च योगस्थानादुत्कृष्टं योगस्थानं सूक्ष्मक्षेत्रपल्योपमासंख्येयभागगुणितमेव प्राप्यते नाधिकं । ततः कर्मप्रदेशोपचयादपि जघन्यादुत्कृष्टः कर्मप्रदेशोपचयः सूक्ष्मक्षेत्रपल्योपमासंख्येयभागगुणित एव भवति, नाधिकः । तदाश्रिता च प्रत्येकशरीरिद्रव्यवर्गणा । ततः प्रत्येकशरीरिद्रव्यवर्गणाऽप्युत्कृष्टा जघन्यप्रत्येकशरीरिद्रव्यवर्गणापेक्षया सूक्ष्मक्षेत्रपल्योपमासंख्येयभागगुणितैव भवति । ततोऽनन्तरमेकपरमाण्वधिकस्कन्धरूपा जघन्या द्वितीयध्रुवशून्यवर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया द्वितीयध्रुवशून्यवर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा द्वितीयध्रुवशून्यवर्गणास्तावद्वक्तव्या यावदुत्कृष्टा द्वितीयध्रुवशून्यवर्गणा । जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा । गुणकारश्चासंख्येयलोका-

काशप्रदेशराशिप्रमाणो द्रष्टव्यः । तत एकपरमाण्वधिकस्कन्धरूपा जघन्या बादरनिगोदवर्गणा । अथ केयं बादरनिगोदद्रव्यवर्गणा नाम ? उच्यते—बादरनिगोदजीवानामौदारिकतैजसकार्मणेषु शरीरनामकर्मसु प्रत्येकं ये सर्वजीवानन्तगुणाः पुद्गला विश्रसापरिणामेनोपचयमायान्ति ते बादरनिगोदद्रव्यवर्गणा । तत्र बादरनिगोदजीवानां यद्यपि केषांचित् कियंत्कालं वैक्रियाहारकशरीरनामकर्मणी अपि संभवतः, तथापि ते प्रथमसमयादेव निरन्तरमुद्वर्त्यमानत्वादत्यन्तमसारे इति न विवक्ष्येते । ततो द्विपरमाण्वधिकस्कन्धरूपा वर्गणा द्वितीया बादरनिगोदद्रव्यवर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा बादरनिगोदद्रव्यवर्गणा । जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा । गुणकारश्च क्षेत्रपल्योपमासंख्येयभागलक्षणः । अत्र युक्तिः प्रत्येकशरीरिद्रव्यवर्गणायामिव परिभावनीया । तत एकपरमाण्वधिकस्कन्धरूपा जघन्या तृतीयध्रुवशून्यवर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया तृतीयध्रुवशून्यवर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा तृतीयध्रुवशून्यवर्गणा भवति । जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा । गुणकारश्चांगुलमात्रे क्षेत्रे आवलिकाया असंख्येयतमे भागे यावन्तः समयास्तावन्ति वर्गमूलानि गृह्यन्ते, गृहीत्वा च चरमस्य वर्गमूलस्यासंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावत्प्रमाणो द्रष्टव्यः । तत एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्या सूक्ष्मनिगोदद्रव्यवर्गणा । सा च सूक्ष्मनिगोदवर्गणा बादरनिगोदद्रव्यवर्गणावदविशेषेणावगन्तव्या, यावदुत्कृष्टा । जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा । गुणकारश्चावलिकाया असंख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणो द्रष्टव्यः । यतः सूक्ष्मनिगोदजीवानां जघन्याद्योगस्थानादुत्कृष्टं योगस्थानं आवलिकाऽसंख्येयभागगुणि-

तमेवं प्राप्यते, नाधिकं। योगाधीना च कर्मप्रदेशोपचयवृद्धिः, तदधीना च सूक्ष्मनिगोदवर्गणेति। तत्र एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्या तुरीयध्रुवशून्यवर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया तुरीयध्रुवशून्यवर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा तुरीयध्रुवशून्यवर्गणा। जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा। गुणकारश्च प्रतरासंख्येयभागवर्त्यसंख्येयश्रेणिगताकाशप्रदेशराशिप्रमाणो द्रष्टव्यः। तत्र एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्या महास्कन्धवर्गणा। महास्कन्धवर्गणा नाम ये पुद्गलस्कन्धा विश्रसापरिणामेन टंककूटपर्वतादिसमाश्रिताः। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया महास्कन्धवर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा भवति। जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा। गुणकारश्च पल्योपमासंख्येयभागरूपो द्रष्टव्यः। इमाश्च महास्कन्धवर्गणा यदा भूयान् त्रसकायो भवति तदा स्तोकाः प्राप्यन्ते, यदा त्वल्पस्तदा प्रभूता इति वस्तुस्वभाव एषः। एताश्च परमाणुवर्गणाद्या महास्कन्धवर्गणापर्यवसानाः 'गुणनिप्फन्नसनाम त्ति' गुणैः कृत्वा निष्पन्नं स्वं स्वकीयं नाम यासां ता गुणनिष्पन्नस्वनामानः। तथाहि–एकैकपरमाणवः परमाणुवर्गणा, द्वयोः परमाण्वोर्वर्गणा द्विपरमाणुवर्गणाः, इत्येवं नाम्नां यथार्थता विद्यते एव। तथा 'असंखभागंगुलवगाहो त्ति' सर्वासामपि वर्गणानामवगाहोऽङ्गुलस्यासंख्येयो भागः। तथाहि–एता वर्गणाः सर्वा अपि सर्वोत्कृष्टमहास्कन्धवर्गणापर्यवसानाः प्रदेशापेक्षया यथोत्तरं महत्यः। महत्तरा अपि भवन्त्यः प्रत्येकमेकैकाः सत्योऽङ्गुलासंख्येयभागमात्रक्षेत्रावगाढा एव विद्यन्ते। यदा पुनः सामस्त्येन प्रत्येकं विवक्ष्यन्ते, तदा सर्वा अप्येताः परमाणुवर्गणाद्याः सर्वोत्कृष्टमहास्कन्धवर्गणापर्यवसानाः प्रत्येकमनन्तानन्ताः सकललो-

काश्रिता अवगन्तव्याः । तथा कार्मणशरीरप्रायोग्यवर्गणात आरभ्यार्वाक् यावदौदारिकशरीरप्रायोग्या वर्गणास्तावत् क्षेत्रावगाहोऽसंख्येयगुणो द्रष्टव्यः, तद्यथा–कर्मवर्गणावगाहक्षेत्रान्मनोवर्गणावगाहक्षेत्रं प्रदेशतोऽसंख्येयगुणं। ततोऽप्यानप्राणावगाहक्षेत्रं प्रदेशतोऽसंख्येयगुणमित्यादि ॥ १८-१९-२० ॥

इह योगैस्तदनुरूपपुद्गलस्कन्धान् गृहीत्वा शरीरादिरूपतया परिणमयतीत्युक्तं, तत्र तान् पुद्गलान् किं जीवो देशेन गृह्णाति उत सर्वात्मनेत्येवं प्रश्नावकाशमाशंक्योत्तरं वितितीर्षुराह—

**एगमवि गहणदव्वं सव्वप्पणयाएॅ जीवदेसम्मि । सव्वप्पणया सव्वत्थ वावि सव्वे गहणखंधे ॥ २१ ॥**

एग त्ति–इह जीवः स्वप्रदेशावगाढमेव दलिकं गृह्णाति, न त्वनन्तरपरंपरप्रदेशावगाढं । तत्रैकस्मिन् जीवप्रदेशे यदवगाढं ग्रहणद्रव्यं ग्रहणप्रायोग्यं दलिकं तदेकमपि गृह्णाति । 'सव्वप्पणयाए त्ति' सर्वात्मना गृह्णाति सर्वैरेवात्मप्रदेशैर्गृह्णातीत्यर्थः । जीवप्रदेशानां सर्वेषामपि श्रृंखलावयवानामिव परस्परं संबन्धविशेषभावात् । तथाहि–एकस्मिन् जीवप्रदेशे स्वक्षेत्रावगाढग्रहणप्रायोग्यद्रव्यग्रहणाय व्याप्रियमाणे सर्वेऽप्यात्मप्रदेशा अनन्तरपरंपरतया तद्द्रव्यग्रहणाय व्याप्रियन्ते । यथा हस्ताग्रेण कस्मिंश्चिद्ग्राह्ये घटादिके गृह्यमाणे मणिबन्धकूर्परांसादयोऽपि तद्ग्रहणायानन्तरपरंपरतया व्याप्रियन्ते, तथा 'सव्वत्थ वावि त्ति' सर्वत्रापि सर्वेष्वपि जीवप्रदेशेषु येऽवगाढा ग्रहणप्रायोग्याः स्कन्धाः, तानपि ग्रहणप्रायोग्यान् स्कन्धान् सर्वान् गृह्णाति जीवः सर्वात्मना सर्वैरेवात्मप्रदेशैः एकैकस्कन्धग्रहणं प्रति सर्वजीवप्रदेशानामनन्तरपरंपरतया व्याप्रियमाणत्वात् इति ॥ २१ ॥

इह पुद्गलद्रव्याणां परस्परं संबन्धः स्नेहतो भवति । ततोऽवश्यं स्नेहप्ररूपणा कर्तव्या । सा च त्रिधा । तद्यथा— स्नेहप्रत्ययस्पर्धकप्ररूपणा, नामप्रत्ययस्पर्धकप्ररूपणा, प्रयोगप्रत्ययस्पर्धकप्ररूपणा च । तत्र स्नेहप्रत्ययस्य स्नेहनिमित्तस्य स्पर्धकस्य प्ररूपणा स्नेहप्रत्ययस्पर्धकप्ररूपणा । तथा शरीरबन्धननामकर्मोदयतः परस्परं बद्धानां शरीरपुद्गलानां स्नेहमधिकृत्य स्पर्धकप्ररूपणा नामप्रत्ययस्पर्धकप्ररूपणा । शब्दार्थश्चायं—नामप्रत्ययस्य बन्धननामनिमित्तस्य शरीरप्रदेशस्पर्धकस्य प्ररूपणा नामप्रत्ययस्पर्धकप्ररूपणा । तथा प्रकृष्टो योगः प्रयोगः, तेन प्रत्ययभूतेन कारणभूतेन ये गृहीताः पुद्गलास्तेषां स्नेहमधिकृत्य स्पर्धकप्ररूपणा प्रयोगप्रत्ययस्पर्धकप्ररूपणा । तत्र प्रथमतः स्नेहप्रत्ययस्पर्धकप्ररूपणार्थमाह—

**नेहप्पच्चयफड्डगमेगं अविभागवग्गणा णंता । हस्सेण बहू बद्धा असंखलोगे दुगुणहीणा ॥ २२ ॥**

नेहत्ति—स्नेहप्रत्ययं स्नेहनिमित्तं एकैकस्नेहाविभागवृद्धानां पुद्गलवर्गणानां समुदायरूपं स्पर्धकं स्नेहप्रत्ययस्पर्धकं । तच्चैकमेव भवति । तस्मिंश्च स्पर्धकेऽविभागवर्गणा एकैकस्नेहाविभागाधिकपरमाणुसमुदायरूपा वर्गणा अनन्ता द्रष्टव्याः । तत्र ह्रस्वेनाल्पेन स्नेहेन ये बद्धा युक्ताः पुद्गलास्ते बहवः, अर्थाच्च प्रभूतेन स्नेहेन बद्धाः स्तोकाः । तथा 'असंखलोगे दुगुणहीण त्ति' आदिवर्गणायाः परतोऽसंख्येयलोकाकाशप्रदेशप्रमाणा वर्गणा अतिक्रम्य याऽनन्तरा वर्गणा तस्यां पुद्गलाः प्रथमवर्गणागतपुद्गलापेक्षया द्विगुणहीना भवन्ति । पुनरपि ततोऽसंख्येयलोकाकाशप्रदेशप्रमाणा वर्गणा अतिक्रम्यानन्तरायां वर्गणायां पुद्गला द्विगुणहीना भवन्ति । एवं तावद्वाच्यं यावद्वक्ष्यमाणा संख्येयभागहानिगता चरमा वर्गणा । इयमत्र भावना—इह यः सर्वोत्कृष्टः स्नेहः स केवलिप्रज्ञाछेदनकेन छिद्यते, छित्त्वा छित्त्वा च निर्विभागा भागाः

पृथक् पृथक् व्यवस्थाप्यन्ते । तत्र जगति ये केचित् परमाणव एकेन स्नेहस्य निर्विभागेन भागेन युक्ताः सन्ति, तेषां समुदायः प्रथमा वर्गणा । ये पुनर्द्वाभ्यां स्नेहाविभागाभ्यां युक्ताः परमाणवः सन्ति, तेषां समुदायो द्वितीया वर्गणा । एवं त्रिभिः स्नेहाविभागैर्युक्तानां समुदायस्तृतीया वर्गणा । एवं संख्येयैः स्नेहाविभागैर्युक्तानां संख्येया वर्गणा वाच्या । असंख्येयैः स्नेहाविभागैर्युक्तानां पुनरसंख्येया वर्गणाः । अनन्तैः स्नेहाविभागैर्युक्तानां त्वनन्ता वर्गणाः । द्विधा चात्र प्ररूपणा, तद्यथा—अनन्तरोपनिधया परंपरोपनिधया च । तत्र तावत्प्रथमतोऽनन्तरोपनिधया प्ररूपणा क्रियते—प्रथमायां वर्गणायामेकस्नेहाविभागयुक्तपुद्गलसमुदायरूपायां यावन्तः पुद्गलास्तदपेक्षया द्वितीयस्यां वर्गणायां स्नेहाविभागद्वय-युक्तपुद्गलसमूहरूपायां पुद्गला असंख्येयभागहीना भवन्ति । ततोऽपि तृतीयस्यां वर्गणायामसंख्येयभागहीनाः । एवं प्रति वर्गणामसंख्येयभागहान्या पुद्गलास्तावद्वाच्या यावदनन्ता वर्गणा गता भवन्ति । ततोऽनन्तरायां पुद्गलाः प्राक्त-नवर्गणागतपुद्गलापेक्षया संख्येयभागहीना भवन्ति । ततोऽग्रेतन्यामपि वर्गणायां पुद्गलाः संख्येयभागहीनाः । एवं संख्येयभागहान्यापि वर्गणा अनन्ता वाच्याः । ततोऽनन्तरायां वर्गणायां पुद्गलाः प्राक्तनवर्गणागतपुद्गलापेक्षया संख्ये-यगुणहीना भवन्ति । ततोऽग्रेतन्यामपि वर्गणायां पुद्गलाः संख्येयगुणहीनाः । एवं संख्येयगुणहान्याप्यनन्ता वर्गणा वाच्याः । ततोऽनन्तरायां वर्गणायां पुद्गलाः प्राक्तनवर्गणागतपुद्गलापेक्षयाऽसंख्येयगुणहीना भवन्ति । ततोऽग्रेतन्यामपि वर्गणायां पुद्गला असंख्येयगुणहीनाः । एवमसंख्येयगुणहान्याप्यनन्ता वर्गणा वक्तव्याः । ततोऽनन्तरायां वर्गणायां पुद्गलाः प्राक्तनवर्गणागतपुद्गलापेक्षयाऽनन्तगुणहीना भवन्ति । ततोऽग्रेतन्यामपि वर्गणायां पुद्गला अनन्तगुणहीनाः ।

एवमनन्तगुणहान्याप्यनन्ता वर्गणा वाच्याः यावत्सर्वोत्कृष्टा वर्गणाः। तदेवं कृताऽनन्तरोपनिधया प्ररूपणा, संप्रति परंपरोपनिधया क्रियते। तत्र प्रथमवर्गणायाः परतोऽसंख्येयलोकाकाशप्रदेशप्रमाणा वर्गणा अतिक्रम्य या पराऽन्या वर्गणा तस्यां पुद्गलाः प्रथमवर्गणागतपुद्गलापेक्षया द्विगुणहीना भवन्ति, अर्धा भवन्तीत्यर्थः। ततः पुनरप्यसंख्येयलोकाकाशप्रदेशप्रमाणा वर्गणा अतिक्रम्य या पराऽनन्तरा वर्गणा तस्यां पुद्गला अर्धा भवन्ति। एवं भूयो भूयस्तावद्वक्तव्यं यावदसंख्येयभागहानिगता चरमा वर्गणा। ततः परं संख्येयभागहानिगता वर्गणाः संख्येया अतिक्रम्यानन्तरायां वर्गणायां पुद्गला असंख्येयभागहानिगतचरमवर्गणापुद्गलापेक्षयाऽर्धा भवन्ति। ततः पुनरपि संख्येया वर्गणा अतिक्रम्यानन्तरायां वर्गणायां पुद्गला अर्धा भवन्ति। एवं भूयो भूयस्तावद्वक्तव्यं यावत्संख्येयभागहानावपि चरमा वर्गणा। उपरितनीषु चतसृषु हानिषु इयं परंपरोपनिधा न संभवति। यतः प्रथमायामपि संख्येयगुणहानिवर्गणायां पुद्गलाः संख्येयभागहानिसत्कचरमवर्गणान्तर्गतपुद्गलापेक्षया संख्येयगुणहीनाः प्राप्यन्ते। संख्येयगुणहीनाश्च जघन्यतोऽपि त्रिगुणहीनाश्चतुर्गुणहीना वा गृह्यन्ते, न तु द्विगुणहीनाः, यतः संख्येयं प्रायः सर्वत्राप्यजघन्योत्कृष्टं त्रिप्रभृत्येव गृह्यते, न तु द्वौ, नापि सर्वोत्कृष्टं तदुक्तमनुयोगद्वारचूर्णौ–"सिद्धंते य जत्थ जत्थ संखेज्जगगहणं तत्थ तत्थ अजहण्णमणुक्कोसयं दट्ठवं ति"। तत इत ऊर्ध्वं द्विगुणहीना न प्राप्यन्ते, किंतु त्रिगुणचतुर्गुणादिहीना इति नेयं द्विगुणहान्या परंपरोपनिधा संभवति। तस्मान्मूलत आरभ्यान्यथात्र परंपरोपनिधया प्ररूपणा क्रियते–असंख्येयभागहानौ प्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणा असंख्येयभागहीनाः काश्चित्संख्येयभागहीनाः काश्चिदसंख्येय-

गुणहीनाः काश्चिदसंख्येयगुणहीनाः काश्चिदनन्तगुणहीनाः । एवमसंख्येयभागहानौ प्रथमवर्गणापेक्षया पश्चादपि हानयः संभवन्ति । संख्येयभागहानौ पुनरसंख्येयभागहानिवर्जाः शेषाश्चतस्रोऽपि हानयः संभवन्ति । तद्यथा–संख्येयभागहानिप्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणाः संख्येयभागहीनाः, काश्चित्संख्येयगुणहीनाः, काश्चिदसंख्येयगुणहीनाः काश्चिदनन्तगुणहीनाः । संख्येयगुणहानौ पुनरसंख्येयभागहानिसंख्येयभागहानिवर्जाः शेषास्तिस्रो हानयः संभवन्ति । तद्यथा–संख्येयगुणहानौ प्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणाः संख्येयगुणहीनाः, काश्चिदसंख्येयगुणहीनाः, काश्चिदनन्तगुणहीनाः । असंख्येयगुणहानौ पुनर्द्वे एव हानी । तथाहि–असंख्येयगुणहानौ प्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणा असंख्येयगुणहीनाः, काश्चिदनन्तगुणहीनाः । अनन्तगुणहानौ त्वनन्तगुणहानिरेवैका । तदेवं कृता परंपरोपनिधया प्ररूपणा । सांप्रतमल्पबहुत्वमुच्यते–तत्रासंख्येयभागहानौ वर्गणाः स्तोकाः । ताभ्यः संख्येयभागहानौ वर्गणा अनन्तगुणाः । ताभ्योऽपि संख्येयगुणहानौ वर्गणा अनन्तगुणाः । ताभ्योऽप्यसंख्येयगुणहानौ वर्गणा अनन्तगुणाः । ताभ्योऽप्यनन्तगुणहानौ वर्गणा अनन्तगुणाः । तथाऽनन्तगुणहानौ पुद्गलाः सर्वस्तोकाः । तेभ्योऽसंख्येयगुणहानौ पुद्गला अनन्तगुणाः । तेभ्योऽपि संख्येयगुणहानौ पुद्गला अनन्तगुणाः । तेभ्योऽपि संख्येयभागहानौ पुद्गला अनन्तगुणाः । तेभ्योऽप्यसंख्येयभागहानौ पुद्गला अनन्तगुणाः ॥ २२ ॥

तदेवमुक्तं सप्रपञ्चं स्नेहप्रत्ययं स्पर्धकं, इदानीं नामप्रत्ययस्पर्धकप्रयोगप्रत्ययस्पर्धकप्ररूपणां चिकीर्षुरिदमाह—

**नामप्पओगपच्चयगेसु वि नेया अनंतगुणणाए। धणिया देसगुणा सिं जहन्नजेट्ठे सगे कट्टु ॥ २३ ॥**

नाम त्ति–इह नामप्रत्ययस्पर्धकप्ररूपणायां षडनुयोगद्वाराणि । तद्यथा–अविभागप्ररूपणा १, वर्गणाप्ररूपणा २, स्पर्धकप्ररूपणा ३, अन्तरप्ररूपणा ४, वर्गणापुद्गलस्नेहाविभागसकलसमुदायप्ररूपणा ५, स्थानप्ररूपणा ६, चेति । तत्र प्रथमतोऽविभागप्ररूपणा क्रियते–औदारिकादिशरीरपञ्चकप्रायोग्यानां परमाणूनां यो रसः, स केवलिप्रज्ञाच्छेदनकेन छिद्यते । छित्त्वा च निर्विभागा भागाः क्रियन्ते, ते च निर्विभागा भागा गुणपरमाणवो वा भावपरमाणवो वा प्रोच्यन्ते । एषाऽविभागप्ररूपणा । तत्रैकेन स्नेहाविभागेन युक्ताः शरीरयोग्याः पुद्गला न भवन्ति । किमुक्तं भवति ? औदारिकौदारिकबन्धनादीनां पञ्चदशानां बन्धनानामन्यतमस्यापि बन्धनस्य विषया न भवन्तीत्यर्थः । नापि द्वाभ्यां स्नेहाविभागाभ्यां युक्ता । नापि त्रिभिर्नापि संख्येयैर्नाप्यसंख्येयैर्नाप्यनन्तैः, किं त्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैः, ततस्तेषां पुद्गलानां समुदायः प्रथमा वर्गणा, सा च जघन्या । तत एकेन स्नेहाविभागेनाधिकानां पुद्गलानां समुदायो द्वितीया वर्गणा । द्वाभ्यां स्नेहाविभागाभ्यामधिकानां समुदायस्तृतीया वर्गणा । एवमेकैकाविभागवृद्ध्या निरन्तरं तावद्वर्गणा वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति । एतासां च समुदाय एकं स्पर्धकं । तत इत ऊर्ध्वमेकेन स्नेहाविभागेनाधिकाः परमाणवो न प्राप्यन्ते, नापि द्वाभ्यां, नापि त्रिभिः, नापि संख्येयैः, नाप्यसंख्येयैः, नाप्यनन्तैः, किंत्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैरधिकाः प्राप्यन्ते । ततस्तेषां समुदायो द्वितीयस्य स्पर्धकस्य

गुणहीनाः काश्चिदसंख्येयगुणहीनाः काश्चिदनन्तगुणहीनाः । एवमसंख्येयभागहानौ प्रथमवर्गणापेक्षया पञ्चापि हानयः संभवन्ति । संख्येयभागहानौ पुनरसंख्येयभागहानिवर्जाः शेषाश्चतस्रोऽपि हानयः संभवन्ति । तद्यथा–संख्येयभागहानिप्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणाः संख्येयभागहीनाः, काश्चित्संख्येयगुणहीनाः, काश्चिदसंख्येयगुणहीनाः काश्चिदनन्तगुणहीनाः । संख्येयगुणहानौ पुनरसंख्येयभागहानिसंख्येयभागहानिवर्जाः शेषास्तिस्रो हानयः संभवन्ति । तद्यथा–संख्येयगुणहानौ प्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणाः संख्येयगुणहीनाः, काश्चिदसंख्येयगुणहीनाः, काश्चिदनन्तगुणहीनाः । असंख्येयगुणहानौ पुनर्द्वे एव हानी । तथाहि–असंख्येयगुणहानौ प्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणा असंख्येयगुणहीनाः, काश्चिदनन्तगुणहीनाः । अनन्तगुणहानौ त्वनन्तगुणहानिरेवैका । तदेवं कृता परंपरोपनिधया प्ररूपणा । सांप्रतमल्पबहुत्वमुच्यते–तत्रासंख्येयभागहानौ वर्गणाः स्तोकाः । ताभ्यः संख्येयभागहानौ वर्गणा अनन्तगुणाः । ताभ्योऽपि संख्येयगुणहानौ वर्गणा अनन्तगुणाः । ताभ्योऽप्यसंख्येयगुणहानौ वर्गणा अनन्तगुणाः । ताभ्योऽप्यनन्तगुणहानौ वर्गणा अनन्तगुणाः । तथाऽनन्तगुणहानौ पुद्गलाः सर्वस्तोकाः । तेभ्योऽसंख्येयगुणहानौ पुद्गला अनन्तगुणाः । तेभ्योऽपि संख्येयगुणहानौ पुद्गला अनन्तगुणाः । तेभ्योऽपि संख्येयभागहानौ पुद्गला अनन्तगुणाः । तेभ्योऽप्यसंख्येयभागहानौ पुद्गला अनन्तगुणाः ॥ २२ ॥

तदेवमुक्तं सप्रपञ्चं स्नेहप्रत्ययं स्पर्धकं, इदानीं नामप्रत्ययस्पर्धकप्रयोगप्रत्ययस्पर्धकप्ररूपणां चिकीर्षुरिदमाह—

**नामप्पओगपच्चयगेसु वि नेया अनंतगुणणाए। धणिया देसगुणा सिं जहन्नजेट्ठे सगे कट्टु ॥ २३ ॥**

नाम त्ति–इह नामप्रत्ययस्पर्धकप्ररूपणायां षडनुयोगद्वाराणि । तद्यथा—अविभागप्ररूपणा १, वर्गणाप्ररूपणा २, स्पर्धकप्ररूपणा ३, अन्तरप्ररूपणा ४, वर्गणापुद्गलस्नेहाविभागसकलसमुदायप्ररूपणा ५, स्थानप्ररूपणा ६, चेति । तत्र प्रथमतोऽविभागप्ररूपणा क्रियते—औदारिकादिशरीरपञ्चकप्रायोग्यानां परमाणूनां यो रसः, स केवलिप्रज्ञाच्छेदनकेन छिद्यते । छित्त्वा च निर्विभागा भागाः क्रियन्ते, ते च निर्विभागा भागा गुणपरमाणवो वा भावपरमाणवो वा प्रोच्यन्ते । एषाऽविभागप्ररूपणा । तत्रैकेन स्नेहाविभागेन युक्ताः शरीरयोग्याः पुद्गला न भवन्ति । किमुक्तं भवति ? औदारिकौदारिकबन्धनादीनां पञ्चदशानां बन्धनानामन्यतमस्यापि बन्धनस्य विषया न भवन्तीत्यर्थः । नापि द्वाभ्यां स्नेहाविभागाभ्यां युक्ताः । नापि त्रिभिर्नापि संख्येयैर्नाप्यसंख्येयैर्नाप्यनन्तैः, किं त्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैः, ततस्तेषां पुद्गलानां समुदायः प्रथमा वर्गणा, सा च जघन्या । तत एकेन स्नेहाविभागेनाधिकानां पुद्गलानां समुदायो द्वितीया वर्गणा । द्वाभ्यां स्नेहाविभागाभ्यामधिकानां समुदायस्तृतीया वर्गणा । एवमेकैकाविभागवृद्ध्या निरन्तरं तावद्वर्गणा वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति । एतासां च समुदाय एकं स्पर्धकं । तत इत ऊर्ध्वमेकेन स्नेहाविभागेनाधिकाः परमाणवो न प्राप्यन्ते, नापि द्वाभ्यां, नापि त्रिभिः, नापि संख्येयैः, नाप्यसंख्येयैः, नाप्यनन्तैः, किंत्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैरधिकाः प्राप्यन्ते । ततस्तेषां समुदायो द्वितीयस्य स्पर्धकस्य

गुणहीनाः काश्चिदसंख्येयगुणहीनाः काश्चिदनन्तगुणहीनाः । एवमसंख्येयभागहानौ प्रथमवर्गणापेक्षया पश्चापि हानयः संभवन्ति । संख्येयभागहानौ पुनरसंख्येयभागहानिवर्जाः शेषाश्चतस्रोऽपि हानयः संभवन्ति । तद्यथा–संख्येयभागहानिप्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणाः संख्येयभागहीनाः, काश्चित्संख्येयगुणहीनाः, काश्चिदसंख्येयगुणहीनाः काश्चिदनन्तगुणहीनाः । संख्येयगुणहानौ पुनरसंख्येयभागहानिर्संख्येयभागहानिवर्जाः शेषास्तिस्रो हानयः संभवन्ति । तद्यथा–संख्येयगुणहानौ प्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणाः संख्येयगुणहीनाः, काश्चिदसंख्येयगुणहीनाः, काश्चिदनन्तगुणहीनाः । असंख्येयगुणहानौ पुनर्द्वे एव हानी । तथाहि–असंख्येयगुणहानौ प्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणा असंख्येयगुणहीनाः, काश्चिदनन्तगुणहीनाः । अनन्तगुणहानौ त्वनन्तगुणहानिरेवैका । तदेवं कृता परंपरोपनिधया प्ररूपणा । सांप्रतमल्पबहुत्वमुच्यते–तत्रासंख्येयभागहानौ वर्गणाः स्तोकाः । ताभ्यः संख्येयभागहानौ वर्गणा अनन्तगुणाः । ताभ्योऽपि संख्येयगुणहानौ वर्गणा अनन्तगुणाः । ताभ्योऽप्यसंख्येयगुणहानौ वर्गणा अनन्तगुणाः । ताभ्योऽप्यनन्तगुणहानौ वर्गणा अनन्तगुणाः । तथाऽनन्तगुणहानौ पुद्गलाः सर्वस्तोकाः । तेभ्योऽसंख्येयगुणहानौ पुद्गला अनन्तगुणाः । तेभ्योऽपि संख्येयगुणहानौ पुद्गला अनन्तगुणाः । तेभ्योऽपि संख्येयभागहानौ पुद्गला अनन्तगुणाः । तेभ्योऽप्यसंख्येयभागहानौ पुद्गला अनन्तगुणाः ॥ २२ ॥

संख्यस्य ततिसंख्यस्य स्पर्धकस्यादिवर्गणायां द्रष्टव्याः । तानि च स्पर्धकानि कियन्ति भवन्तीति चेदुच्यते–अजघन्योऽनन्तगुणानि सिद्धानामनन्तभागकल्पानि । अन्तराणि कियन्ति भवन्तीति चेदुच्यते–रूपोनस्पर्धकतुल्यानि । तथाहि–चतुर्णामन्तराणि त्रीण्येव भवन्ति, नोनाधिकानि । एवमत्रापि भावनीयं । वर्गणास्वानन्तर्येण द्वे वृद्धी भवतः । तद्यथा–एकैकाविभागवृद्धिः, अनन्तानन्तविभागवृद्धिश्च । तत्रैकैकाविभागवृद्धिः स्पर्धकगतानां वर्गणानां यथोत्तरं, अनन्तानन्तविभागवृद्धिः पाश्चात्यस्पर्धकगतचरमवर्गणापेक्षयोत्तरस्पर्धकस्यादिवर्गणायाः, पारंपर्येण पुनः प्रथमस्पर्धकस्रूपप्रथमवर्गणापेक्षया षडपि वृद्धयोऽवगन्तव्याः । तद्यथा–अनन्तभागवृद्धिः, असंख्येयभागवृद्धिः, संख्येयभागवृद्धिः, संख्येयगुणवृद्धिः, असंख्येयगुणवृद्धिः, अनन्तगुणवृद्धिश्चेति । तदेवं कृता वर्गणाप्ररूपणा स्पर्धकप्ररूपणा अन्तरप्ररूपणा च । सांप्रतं वर्गणागतपुद्गलस्नेहाविभागसमुदायप्ररूपणा क्रियते–तत्र प्रथमस्य शरीरस्थानस्य प्रथमायां वर्गणायां स्नेहाविभागाः स्तोकाः । ततो द्वितीयस्य शरीरस्थानस्य प्रथमवर्गणायामनन्तगुणाः । तेभ्योऽपि तृतीयशरीरस्थानस्य प्रथमवर्गणायामनन्तगुणाः । एवमनन्तगुणया श्रेण्या सर्वाण्यपि स्थानानि नेतव्यानि । शरीरस्थानानि च वक्ष्यमाणस्पर्धकसंख्याप्रमाणानि । संप्रति शरीरपरमाणूनामेव तत्तद्बन्धनयोग्यानामल्पबहुत्वमभिधीयते–तत्रौदारिकौदारिकबन्धनयोग्याः पुद्गलाः सर्वस्तोकाः । तेभ्य औदारिकतैजसबन्धनयोग्या अनन्तगुणाः । तेभ्योऽप्यौदारिककार्मणबन्धनयोग्या अनन्तगुणाः । तेभ्योऽप्यौदारिकतैजसकार्मणबन्धनयोग्या अनन्तगुणाः । तथा वैक्रियवैक्रियबन्धनयोग्याः पुद्गलाः सर्वस्तोकाः । तेभ्योऽपि वैक्रियतैजसबन्धनयोग्या अनन्तगुणाः । तेभ्योऽपि वैक्रियकार्मणबन्धनयोग्या अनन्तगुणाः ।

प्रथमा वर्गणा । तस्यां कियन्तः स्नेहाविभागा इति चेदुच्यते—यावन्तः प्रथमस्पर्धकप्रथमवर्गणायां स्नेहाविभागास्तावन्तो द्विगुणाः । तत एकेन स्नेहाविभागेनाधिकानां परमाणूनां समुदायो द्वितीया वर्गणा । द्वाभ्यां स्नेहाविभागाभ्यामधिकानां समुदायस्तृतीया वर्गणा । एवमेकैकस्नेहाविभागवृध्द्या निरन्तरं वर्गणास्तावद्वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति । ततस्तासां समुदायो द्वितीयं स्पर्धकं । ततः पुनरप्यत ऊर्ध्वमेकेन स्नेहाविभागेनाधिकाः परमाणवो न प्राप्यन्ते, नापि द्वाभ्यां, नापि त्रिभिः, यावन्नापि संख्येयैः, नाप्यसंख्येयैः, नाप्यनन्तैः, किंत्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैः । ततस्तेषां परमाणूनां समुदायस्तृतीयस्पर्धकस्य प्रथमा वर्गणा । तस्यां कियन्तः स्नेहाविभागा इति चेदुच्यते—यावन्तः प्रथमस्पर्धकसत्कप्रथमवर्गणायां तावन्तस्त्रिगुणाः । तत एकेन स्नेहाविभागेनाधिकानां परमाणूनां समुदायो द्वितीया वर्गणा । द्वाभ्यां स्नेहाविभागाभ्यामधिकानां समुदायतृस्तीया वर्गणा । एवमेकैकस्नेहाविभागवृध्द्या निरन्तरं वर्गणास्तावद्वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति । ततस्तासां समुदायस्तृतीयं स्पर्धकं । ततः पुनरप्यत ऊर्ध्वमेकेन स्नेहाविभागेनाधिकाः परमाणवो न प्राप्यन्ते, नापि द्वाभ्यां, नापि त्रिभिः, यावन्नापि संख्येयैः, नाप्यसंख्येयैः, नाप्यनन्तैः किंत्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैरधिकाः प्राप्यन्ते । ततस्तेषां समुदायश्चतुर्थस्य स्पर्धकस्य प्रथमा वर्गणा । तस्यां कियन्तः स्नेहाविभागा इति चेदुच्यते—प्रथमस्पर्धकसत्क प्रथमवर्गणायां यावन्तः स्नेहाविभागास्तावन्तश्चतुर्गुणाः । एवं यतिसंख्यं यतिसंख्यं स्पर्धकं चिन्तयितुमारभ्यते, तद्यथा—पञ्चमं दशमं विंशतितमं सहस्रतमं लक्षतमं तावत्संख्यागुणिताः प्रथमस्पर्धकसत्कप्रथमवर्गणागताः स्नेहाविभागास्तितः

संख्यस्य ततिसंख्यस्य स्पर्धकस्यादिवर्गणायां द्रष्टव्याः । तानि च स्पर्धकानि कियन्ति भवन्तीति चेदुच्यते–अभव्येभ्योऽनन्तगुणानि सिद्धानामनन्तभागकल्पानि । अन्तराणि कियन्ति भवन्तीति चेदुच्यते–रूपोनस्पर्धकतुल्यानि । तथाहि–चतुर्णामन्तराणि त्रीण्येव भवन्ति, नोनाधिकानि । एवमत्रापि भावनीयं । वर्गणास्वानन्तर्येण द्वे वृद्धी भवतः । तद्यथा–एकैकाविभागवृद्धिः, अनन्तानन्तविभागवृद्धिश्च । तत्रैकैकाविभागवृद्धिः स्पर्धकगतानां वर्गणानां यथोत्तरं, अनन्तानन्तविभागवृद्धिः पाश्चात्यस्पर्धकगतचरमवर्गणापेक्षयोत्तरस्पर्धकस्यादिवर्गणायाः, पारंपर्येण पुनः प्रथमस्पर्धकस्य प्रथमवर्गणापेक्षया षडपि वृद्धयोऽवगन्तव्याः । तद्यथा–अनन्तभागवृद्धिः, असंख्येयभागवृद्धिः, संख्येयभागवृद्धिः, संख्येयगुणवृद्धिः, असंख्येयगुणवृद्धिः, अनन्तगुणवृद्धिश्चेति । तदेवं कृता वर्गणाप्ररूपणा स्पर्धकप्ररूपणा अन्तरप्ररूपणा च । सांप्रतं वर्गणागतपुद्गलस्नेहाविभागसमुदायप्ररूपणा क्रियते–तत्र प्रथमस्य शरीरस्थानस्य प्रथमायां वर्गणायां स्नेहाविभागाः स्तोकाः । ततो द्वितीयस्य शरीरस्थानस्य प्रथमवर्गणायामनन्तगुणाः । तेभ्योऽपि तृतीयशरीरस्थानस्य प्रथमवर्गणायामनन्तगुणाः । एवमनन्तगुणया श्रेण्या सर्वाण्यपि स्थानानि नेतव्यानि । शरीरस्थानानि च वक्ष्यमाणस्पर्धकसंख्याप्रमाणानि । संप्रति शरीरपरमाणूनामेव तत्तद्बन्धनयोग्यानामल्पबहुत्वमभिधीयते–तत्रौदारिकौदारिकबन्धनयोग्याः पुद्गलाः सर्वस्तोकाः । तेभ्य औदारिकतैजसबन्धनयोग्या अनन्तगुणाः । तेभ्योऽप्यौदारिककार्मणबन्धनयोग्या अनन्तगुणाः । तेभ्योऽप्यौदारिकतैजसकार्मणबन्धनयोग्या अनन्तगुणाः । तथा वैक्रियवैक्रियबन्धनयोग्याः पुद्गलाः सर्वस्तोकाः । तेभ्योऽपि वैक्रियतैजसबन्धनयोग्या अनन्तगुणाः । तेभ्योऽपि वैक्रियकार्मणबन्धनयोग्या अनन्तगुणाः ।

तेभ्योऽपि वैक्रियतैजसकार्मणबन्धनयोग्या अनन्तगुणाः । तथा आहारकाहारकबन्धनयोग्याः पुद्गलाः सर्वस्तोकाः । तेभ्योऽप्याहारकतैजसबन्धनयोग्या अनन्तगुणाः । तेभ्योऽप्याहारककार्मणबन्धनयोग्या अनन्तगुणाः । तेभ्योऽप्याहारकतैजसकार्मणबन्धनयोग्या अनन्तगुणाः । तेभ्योऽपि तैजसतैजसबन्धनयोग्या अनन्तगुणाः । तेभ्योऽपि तैजसकार्मणबन्धनयोग्या अनन्तगुणाः । तेभ्योऽपि कार्मणकार्मणबन्धनयोग्या अनन्तगुणा इति । सांप्रतं स्थानप्ररूपणावसरः । तत्र प्रथमं स्पर्धकमादौ कृत्वाऽभव्येभ्योऽनन्तगुणैः सिद्धानन्तकल्पैर्भागैरनन्तैः स्पर्धकैरेकं प्रथमं शरीरप्रायोग्यं स्थानं भवति । ततस्ततिभिरेव स्पर्धकैरनन्तभागवृद्धैर्द्वितीयं शरीरस्थानं भवति । पुनस्ततिभिरेव स्पर्धकैरनन्तभागवृद्धैस्तृतीयं शरीरस्थानं । एवं निरन्तरं पूर्वस्मात् पूर्वस्मादुत्तरोत्तराणि अनन्तभागवृद्धानि शरीरस्थानान्यंगुलमात्रक्षेत्रासंख्येयभागगतप्रदेशराशिप्रमाणानि वाच्यानि । एतानि च समुदितानि एकं कंडकमभिधीयते । तस्माच्च कंडकादुपरि यदन्यच्छरीरस्थानं तत्कंडकगतचरमशरीरस्थानापेक्षयाऽसंख्येयभागवृद्धं । तस्मात्पराणि पुनर्यान्यन्यानि शरीरस्थानानि अंगुलमात्रक्षेत्रासंख्येयभागगतप्रदेशराशिप्रमाणानि तानि सर्वाण्यपि यथोत्तरमनन्तभागवृद्धान्यवसेयानि । एतानि च समुदितानि द्वितीयं कंडकं । तस्माच्च द्वितीयात्कंडकादुपरि यदन्यच्छरीरस्थानं तत्पुनरपि द्वितीयकंडकगतचरमशरीरस्थानापेक्षयाऽसंख्येयभागवृद्धं । ततः पराणि पुनरप्यन्यानि यानि शरीरस्थानानि अंगुलमात्रक्षेत्रासंख्येयभागगतप्रदेशराशिप्रमाणानि तानि सर्वाण्यपि यथोत्तरमनन्तभागवृद्धान्यवसेयानि । एतानि च समुदितानि तृतीयं कंडकं । ततः पुनरप्येकमसंख्येयभागवृद्धं । ततः पुनरपि कंडकमात्राणि शरीरस्थानानि यथोत्तरमनन्तभागवृद्धान्यवसेयानि । एवम-

संख्येयभागान्तरितानि अनन्तभागवृद्धकंडकानि तावद्वाच्यानि यावदसंख्येयभागवृद्धानामपि स्थानानामन्तरान्तरा-भाविनां कंडकं भवति । कंडकं नाम समयपरिभाषयाऽङ्गुलमात्रक्षेत्रासंख्येयभागगतप्रदेशराशिप्रमाणा संख्याऽभिधी-यते । ततः पराणि यथोत्तरमनन्तभागवृद्धानि कंडकमात्राणि शरीरस्थानानि वाच्यानि । ततः परमेकं संख्येयभागवृद्धं स्थानं । ततो मूलादारभ्य यावन्ति स्थानानि प्रागतिक्रान्तानि तावन्ति तथैवा ( तत्रैवा ) भिधाय पुनरप्येकं संख्येय-भागवृद्धं स्थानमभिधानीयं । एवं वक्ष्यमाणक्रमेण षट्स्थानकवृध्द्या शरीरस्थानानि तावद्वक्तव्यानि यावदसंख्येयलो-काकाशप्रदेशप्रमाणानि भवन्ति । उक्ता नामप्रत्ययस्पर्धकप्ररूपणा, सांप्रतं प्रयोगप्रत्ययस्पर्धकप्ररूपणा क्रियते—तत्र प्रयोगो योगः तत्स्थानवृद्ध्या यो रसः कर्मपरमाणुषु केवलयोगप्रत्ययतो बध्यमानेषु परिवर्धते स्पर्धकरूपतया तत्प्रयोगप्रत्यय-स्पर्धकं । उक्तं च—"होइ पओगो जोगो तट्ठाणविवड्ढणाए जो उ रसो । परिवड्ढेई जीवे पयोगफड्डुं तयं बेंति ॥ १ ॥" तस्य षडनुयोगद्वाराणि । तद्यथा—अविभागप्ररूपणा, वर्गणाप्ररूपणा, स्पर्धकप्ररूपणा, अन्तरप्ररूपणा, स्थानप्ररूपणा चेति । एताश्च यथा नामप्रत्ययस्पर्धके प्रागभिहितास्तथैवात्राप्यवगन्तव्याः । तथाऽत्र प्रथमस्थानसत्कप्रथमवर्गणायां सकलपुद्गलस्नेहाविभागाः सर्वस्तोकाः । तेभ्यो द्वितीयस्थानसत्कप्रथमवर्गणायामनन्तगुणाः । तेभ्योऽपि तृतीयस्थान-सत्कप्रथमवर्गणायामनन्तगुणाः । एवं तावद्वेयं यावदन्तिमं स्थानं । तथा च प्रयोगप्रत्ययस्पर्धकमेवाधिकृत्यान्यत्रा-प्युक्तं—"अविभागवग्गफड्डग अंतरठाणाइं एत्थ जह पुव्विं । ठाणाइ वग्गणाओ अणंतगुणणाए गच्छंति ॥ १ ॥" अत्रादि-शब्दात्कंडकादिपरिग्रहः । इदानीमल्पबहुत्वमुच्यते—स्नेहप्रत्ययस्पर्धकस्य जघन्यवर्गणायां सकलपुद्गलगताः स्नेहाविभागाः

तेभ्योऽपि वैक्रियतैजसकार्मणबन्धनयोग्या अनन्तगुणाः । तथा आहारकाहारकबन्धनयोग्याः पुद्गलाः सर्वस्तोकाः । तेभ्योऽप्याहारकतैजसबन्धनयोग्या अनन्तगुणाः । तेभ्योऽप्याहारककार्मणबन्धनयोग्या अनन्तगुणाः । तेभ्योऽप्याहारकतैजसकार्मणबन्धनयोग्या अनन्तगुणाः । तेभ्योऽपि तैजसतैजसबन्धनयोग्या अनन्तगुणाः । तेभ्योऽपि तैजसकार्मणबन्धनयोग्या अनन्तगुणाः । तेभ्योऽपि कार्मणकार्मणबन्धनयोग्या अनन्तगुणा इति । सांप्रतं स्थानप्ररूपणावसरः । तत्र प्रथमं स्पर्धकमादौ कृत्वाऽजव्येभ्योऽनन्तगुणैः सिद्धानन्तकद्भागैरनन्तैः स्पर्धकैरेकं प्रथमं शरीरप्रायोग्यं स्थानं जवति । ततस्तैस्तिजिरेव स्पर्धकैरनन्तजागवृद्धैर्द्वितीयं शरीरस्थानं जवति । पुनस्तैस्तिजिरेव स्पर्धकैरनन्तजागवृद्धैस्तृतीयं शरीरस्थानं । एवं निरन्तरं पूर्वस्मात् पूर्वस्मादुत्तरोत्तराणि अनन्तजागवृद्धानि शरीरस्थानान्यंगुलमात्रक्षेत्रासंख्येयजागगतप्रदेशराशिप्रमाणानि वाच्यानि । एतानि च समुदितानि एकं कंमकमजिधीयते । तस्माच्च कंमकादुपरि यदन्यच्छरीरस्थानं तत्कंमकगतचरमशरीरस्थानापेक्षयाऽसंख्येयजागवृद्धं । तस्मात्पराणि पुनर्यान्यन्यानि शरीरस्थानानि अंगुलमात्रक्षेत्रासंख्येयजागगतप्रदेशराशिप्रमाणानि तानि सर्वाण्यपि यथोत्तरमनन्तजागवृद्धान्यवसेयानि । एतानि च समुदितानि द्वितीयं कंमकं । तस्माच्च द्वितीयात्कंमकादुपरि यदन्यच्छरीरस्थानं तत्पुनरपि द्वितीयकंडकगतचरमशरीरस्थानापेक्षयाऽसंख्येयजागवृद्धं । ततः पराणि पुनरप्यन्यानि यानि शरीरस्थानानि अंगुलमात्रक्षेत्रासंख्येयजागगतप्रदेशराशिप्रमाणानि तानि सर्वाण्यपि यथोत्तरमनन्तजागवृद्धान्यवसेयानि । एतानि च समुदितानि तृतीयं कंमकं । ततः पुनरप्येकमसंख्येयजागवृद्धं । ततः पुनरपि कंमकमात्राणि शरीरस्थानानि यथोत्तरमनन्तजागवृद्धान्यवसेयानि । एवम-

संख्येयभागान्तरितानि अनन्तभागवृद्धकंडकानि तावद्वाच्यानि यावदसंख्येयभागवृद्धानामपि स्थानानामन्तरान्तरा-
भाविनां कंडकं भवति । कंडकं नाम समयपरिभाषयाऽङ्गुलमात्रक्षेत्रासंख्येयभागगतप्रदेशराशिप्रमाणा संख्याऽभिधी-
यते । ततः पराणि यथोत्तरमनन्तभागवृद्धानि कंडकमात्राणि शरीरस्थानानि वाच्यानि । ततः परमेकं संख्येयभागवृद्धं
स्थानं । ततो मूलादारभ्य यावन्ति स्थानानि प्रागतिक्रान्तानि तावन्ति तथैवा ( तत्रैवा ) भिधाय पुनरप्येकं संख्येय-
भागवृद्धं स्थानमभिधानीयं । एवं वक्ष्यमाणक्रमेण षट्स्थानकवृध्धा शरीरस्थानानि तावद्वक्तव्यानि यावदसंख्येयलो-
काकाशप्रदेशप्रमाणानि भवन्ति । उक्ता नामप्रत्ययस्पर्धकप्ररूपणा, सांप्रतं प्रयोगप्रत्ययस्पर्धकप्ररूपणा क्रियते–तत्र प्रयोगो
योगः तत्स्थानवृद्धया यो रसः कर्मपरमाणुषु केवलयोगप्रत्ययतो बध्यमानेषु परिवर्धते स्पर्धकरूपतया तत्प्रयोगप्रत्यय-
स्पर्धकं । उक्तं च–"होइ पओगो जोगो तट्ठाणविवड्ढणाए जो उ रसो । परिवड्ढेई जीवे पयोगफड्डं तयं बेंति ॥ १ ॥"
तस्य षडनुयोगद्वाराणि । तद्यथा–अविभागप्ररूपणा, वर्गणाप्ररूपणा, स्पर्धकप्ररूपणा, अन्तरप्ररूपणा, स्थानप्ररूपणा
चेति । एताश्च यथा नामप्रत्ययस्पर्धके प्रागभिहितास्तथैवात्राप्यवगन्तव्याः । तथाऽत्र प्रथमस्थानसत्कप्रथमवर्गणायां
सकलपुद्गलस्नेहाविभागाः सर्वलोकाः । तेभ्यो द्वितीयस्थानसत्कप्रथमवर्गणायामनन्तगुणाः । तेभ्योऽपि तृतीयस्थान-
सत्कप्रथमवर्गणायामनन्तगुणाः । एवं तावन्नेयं यावदन्तिमं स्थानं । तथा च प्रयोगप्रत्ययस्पर्धकमेवाधिकृत्यान्यत्रा-
प्युक्तं–"अविभागवग्गफड्डग अंतरठाणाइं एत्थ जहपुव्विं । ठाणाई वग्गणाओ अणंतगुणणाए गच्छंति ॥ १ ॥" अत्रादि-
शब्दात्कंडकादिपरिग्रहः । इदानीमल्पबहुत्वमुच्यते–स्नेहप्रत्ययस्पर्धकस्य जघन्यवर्गणाया सकलपुद्गलगताः स्नेहाविभागाः

सर्वस्तोकाः । ततस्तस्यैव स्नेहप्रत्ययस्पर्धकस्योत्कृष्टवर्गणायामनन्तगुणाः । तेभ्योऽपि नामप्रत्ययस्पर्धकस्य जघन्यवर्गणायामनन्तगुणाः । तेभ्योऽपि तस्यैवोत्कृष्टवर्गणायामनन्तगुणाः । तेभ्योऽपि प्रयोगप्रत्ययस्पर्धकस्य जघन्यवर्गणायामनन्तगुणाः । तेभ्योऽपि तस्यैवोत्कृष्टवर्गणायामनन्तगुणाः । उक्तं च–"तिण्हं पि फड्डगाणं जहण्ण उक्कोसगा कमा ठविउं । णेयाणंतगुणाउ उ वग्गणा णेहफड्डाउ ॥ १ ॥" संप्रति गाथार्थो विव्रियते–नामप्रत्ययेषु प्रयोगप्रत्ययेष्वपि च स्पर्धकेषु अविभागवर्गणादयः प्राग्वज्ज्ञेयाः । तथाहि–स्नेहप्रत्ययस्पर्धक इवात्रापि अविभागवर्गणा एकैकस्नेहाविभागवृद्धपरमाणुवर्गणा अनन्ताः । तथा स्तोकेन स्नेहेन बद्धाः पुद्गला बहव इतरे स्तोकाः स्तोकतराः । यच्च 'असंखलोगे दुगुणहीणा' इति तदत्रासंभवान्न संबध्यते । स्नेहप्रत्ययस्पर्धकेऽपि हि तत् यथासंभवं स्तोकमेव कालं यावत् योजितं । न पुनः सर्वत्रापि । तथा 'सिं ति' एषां स्नेहप्रत्ययनामप्रत्ययप्रयोगप्रत्ययस्पर्धकानां प्रत्येकं स्वके आत्मीये जघन्योत्कृष्टे वर्गणे बुद्ध्या पृथक् कृत्वा ततः क्रमेण तासु । 'धणिया देसगुण त्ति' धणिया निचिता देशगुणा निर्विभागभागरूपाः सकलपुद्गलगतस्नेहाविभागा इत्यर्थः । तेऽनन्तगुणनयाऽनन्तगुणिततया ज्ञातव्याः । तदेवं कृता पुद्गलानां परस्परं संबन्धहेतुभूतस्य स्नेहस्य प्ररूपणा । संप्रति बन्धनकरणसामर्थ्यतो बध्यमानकर्मपुद्गलानां प्रकृतिस्थित्यनुभागप्रदेशविभागो मन्दमतीनां सुखावबोधाय मोदकदृष्टान्तेन विभाव्यते–यथा किल कश्चिन्मोदको वातविनाशिद्रव्यनिष्पन्नः प्रकृत्या वातमुपशमयति, पित्तोपशमकद्रव्यनिष्पन्नः पित्तं, कफापहारिद्रव्यनिष्पन्नः कफमित्येवंस्वरूपा प्रकृतिर्मोदकस्य । तथा तस्यैव स्थितिः कस्यचिद्दिनमेकं, अपरस्य दिनद्वयं, अन्यस्य मासादिकं कालं यावत् । तथा तस्यैव रसः स्निग्धमधुरादिः कस्य-

चिदेकस्थानकोऽपरस्य द्विस्थानक इत्यादि । तथा तस्यैव प्रदेशाः कणिकादिरूपाः कस्यचिदेकप्रसृतिप्रमाणाः कस्यचिद्विप्रसृतिप्रमाणा इत्यादि । तथा कर्मणोऽपि किञ्चिज्ज्ञानमावृणोति, किञ्चिद्दर्शनं, किञ्चित्सुखदुःखे जनयति, किञ्चिन्मोहयतीत्येवंस्वरूपा प्रकृतिः । तथा स्थितिस्तस्यैव कर्मणः कस्यचित्त्रिंशत्सागरोपमकोटीकोटीप्रमाणा, अपरस्य सप्ततिसागरोपमकोटीकोटीप्रमाणा इत्यादि । तथा रसः कस्यचिदेकस्थानकोऽपरस्य द्विस्थानक इत्यादि । तथा प्रदेशाः कस्यचिद्बहुतराः कस्यचिच्च बहुतमा इति ॥ २३ ॥

तत्र प्रकृतिभेदत एव कर्मणां मूलोत्तरविभागो भवति नान्यथेत्यावेदयन्नाह—

मूलुत्तरपगईणं अणुभागविसेसओ हवइ भेओ । अविसेसियरसपगइओ, पगइबंधो मुणेयव्वो ॥ २४ ॥

मूलु त्ति–इह प्रकृतिशब्दो भेदपर्यायोऽप्यस्ति । तथा चाह भाष्यकृत्–"अहवा पयडी भेओ" इति । ततो मूलोत्तरप्रकृतीनां मूलोत्तरभेदानां कर्मणः संबन्धिनामनुभागविशेषतः स्वभावविशेषतो ज्ञानावारकत्वादिलक्षणात् भेदो भवति, नान्यथा । अनुभागशब्दश्चात्र स्वभावपर्यायोऽवगन्तव्यः । तदुक्तं चूर्णौ–"अनुभागो त्ति सहावो" इति । इह बन्धनकरणे प्रकृतिबन्धादयः प्रत्येकमुपरि सप्रपञ्चं वक्तव्याः । प्रकृत्यादयश्च प्रतिकर्म संकीर्णा इति कश्चिद्व्यामुह्येत, अतस्तन्मोहापनोदाय प्रकृतिबन्धं तुशब्दोपलक्षणद्वारेण अन्यांश्च स्थितिबन्धादीन् वैचित्त्येन (त्र्येण) स्पष्टयन्नाह–'अविसेसियेत्यादि' । रसः स्नेहोऽनुभाग इत्येकार्थः । तस्य प्रकृतिः स्वभावः । अविशेषिताऽविवक्षिता रसप्रकृतिः,

तस्मिंश्चानन्ततमे जागेऽपसारिते शेषं यद्दलिकं तत्सर्वघातिप्रकृतिव्यतिरिक्तेभ्यः तत्कालबध्यमानेभ्यः स्वस्वमूलप्रकृत्यवान्तरजेदेभ्यो विजज्य विजज्य दीयते । तथाहि—'आवरणेत्यादि' आवरणयोर्ज्ञानावरणदर्शनावरणयोः प्रत्येकं सर्वघातिप्रकृतिनिमित्तमनन्ततमे जागेऽपसारिते सति शेषस्य दलिकस्य यथाक्रमं चतुर्धा त्रिधा च विजागः क्रियते, कृत्वा च शेषदेशघातिप्रकृतिज्यो दीयते । तथा विघ्नान्तराये यो मूलजागः स समग्रोऽपि पञ्चधा कृत्वा दानान्तरायादिन्यो दीयते। इयमत्र जावना—ज्ञानावरणीयस्य स्थित्यनुसारेण यो मूलजाग आजजति, तस्यानन्ततमो जागः केवलज्ञानावरणाय दीयते। शेषस्य चत्वारो जागाः क्रियन्ते, ते च मतिज्ञानावरणश्रुतज्ञानावरणावधिज्ञानावरणमनःपर्यवज्ञानावरणेज्यो दीयन्ते। दर्शनावरणीयस्यापि यो मूलजाग आजजति तस्यानन्ततमं जागं षोढा कृत्वा निद्रापञ्चककेवलदर्शनावरणाभ्यां सर्वघातिज्यां प्रयच्छति (जीवः)। शेषस्य च त्रयो जागाः क्रियन्ते, ते च चक्षुरचक्षुरवधिदर्शनावरणेभ्यो दीयन्ते। अन्तरायस्य पुनर्यो मूलजाग आजजति स समग्रोऽपि सर्वघात्यवान्तरजेदाजावात् पञ्चधा कृत्वा दानान्तरायादिज्यो दीयते ॥ २५ ॥

**मोहे डुहा चउहा य पंचहा वा वि वज्जमाणीणं। वेयणियाउयगोएसु वज्जमाणीण जागो सिं ॥ २६ ॥**

मोहे त्ति–मोहे मोहनीये स्थित्यनुसारेण यो मूलजाग आजजति तस्यानन्ततमो भागः सर्वघातिप्रकृतियोग्यो द्विधा क्रियते, अर्धं दर्शनमोहनीयस्य, अर्धं चारित्रमोहनीयस्य। तत्रार्धं दर्शनमोहनीयस्य सत्कं समग्रमपि मिथ्यात्वमोहनीयस्य ढौकते। चारित्रमोहनीयस्य तु सत्कमर्धं द्वादशधा क्रियते, ते च द्वादशजागा आद्येभ्यो द्वादशकषायेभ्यो दीयन्ते।

तस्मिंश्चानन्ततमे भागेऽपसारिते शेषं यद्दलिकं तत्सर्वघातिप्रकृतिव्यतिरिक्तेभ्यः तत्कालबध्यमानेभ्यः स्वस्वमूलप्रकृत्यवान्तरभेदेभ्यो विभज्य विभज्य दीयते । तथाहि-'आवरणेत्यादि' आवरणयोर्ज्ञानावरणदर्शनावरणयोः प्रत्येकं सर्वघातिप्रकृतिनिमित्तमनन्ततमे भागेऽपसारिते सति शेषस्य दलिकस्य यथाक्रमं चतुर्धा त्रिधा च विभागः क्रियते, कृत्वा च शेषदेशघातिप्रकृतिभ्यो दीयते । तथा विघ्नान्तराये यो मूलभागः स समग्रोऽपि पञ्चधा कृत्वा दानान्तरायादिभ्यो दीयते। इयमत्र भावना-ज्ञानावरणीयस्य स्थित्यनुसारेण यो मूलभाग आभजति, तस्यानन्ततमो भागः केवलज्ञानावरणाय दीयते। शेषस्य चत्वारो भागाः क्रियन्ते, ते च मतिज्ञानावरणश्रुतज्ञानावरणावधिज्ञानावरणमनःपर्यवज्ञानावरणेभ्यो दीयन्ते। दर्शनावरणीयस्यापि यो मूलभाग आभजति तस्यानन्ततमं भागं षोढा कृत्वा निद्रापञ्चककेवलदर्शनावरणाभ्यां सर्वघातिभ्यां प्रयच्छति (जीवः)। शेषस्य च त्रयो भागाः क्रियन्ते, ते च चक्षुरचक्षुरवधिदर्शनावरणेभ्यो दीयन्ते। अन्तरायस्य पुनर्यो मूलभाग आभजति स समग्रोऽपि सर्वघात्यवान्तरभेदाभावात् पञ्चधा कृत्वा दानान्तरायादिभ्यो दीयते ॥ २५ ॥

**मोहे दुहा चउहा य पंचहा वा वि बज्झमाणीणं। वेयणियाउयगोएसु बज्झमाणीण भागो सिं ॥ २६ ॥**

मोहे त्ति-मोहे मोहनीये स्थित्यनुसारेण यो मूलभाग आभजति तस्यानन्ततमो भागः सर्वघातिप्रकृतियोग्यो द्विधा क्रियते, अर्धं दर्शनमोहनीयस्य, अर्धं चारित्रमोहनीयस्य। तत्रार्धं दर्शनमोहनीयस्य सत्कं समग्रमपि मिथ्यात्वमोहनीयस्य ढौकते। चारित्रमोहनीयस्य तु सत्कमर्धं द्वादशधा क्रियते, ते च द्वादशभागा आद्येभ्यो द्वादशकषायेभ्यो दीयन्ते।

गन्धरसस्पर्शानामपि यस्य यावन्तो भेदास्तस्य संबन्धिनो भागस्य तति भागाः कृत्वा तावद्भ्योऽवान्तरभेदेभ्यो दातव्याः । तथा संघाते तनौ च प्रत्येकं यद्भागलब्धं दलिकमायाति तत्त्रिधा चतुर्धा वा कृत्वा त्रिभ्यश्चतुर्भ्यो वा दीयते । तत्रौदारि-कतैजसकार्मणानि वैक्रियतैजसकार्मणानि वा त्रीणि शरीराणि संघातानि वा युगपद्बध्नता त्रिधा क्रियते, वैक्रियाहारकतै-जसकार्मणरूपाणि चत्वारि शरीराणि संघातानि वा बध्नता चतुर्धा क्रियते ॥ २७ ॥

**सत्तेक्कारविगप्पा बंधणनामाण मूलपगईणं । उत्तरसगपगईण य अप्पबहुत्ता विसेसो सिं ॥ २८ ॥**

सत्तेति-बन्धननाम्नां भागलब्धं यद्दलिकमायाति तस्य सप्त विकल्पाः सप्तभेदा एकादश वा विकल्पाः क्रियन्ते । तत्रौदारिकौदारिक १ औदारिकतैजस २ औदारिककार्मण ३ औदारिकतैजसकार्मण ४ तैजसतैजस ५ तैजसकार्मण ६ कार्मणकार्मण ७ रूपाणि वैक्रियचतुष्कतैजसत्रिकरूपाणि वा सप्त बन्धनानि बध्नता सप्त । वैक्रियचतुष्काहारकच-तुष्कतैजसत्रिकलक्षणान्येकादश बन्धनानि बध्नता एकादश । अवशेषाणां च प्रकृतीनां यद्भागलब्धं दलिकमायाति, तन्न भूयो विभज्यते, तासां युगपदवान्तरद्वित्र्यादिभेदबन्धाभावात् । तेन तासां तदेव परिपूर्णं दलिकं भवति । इहैका-ध्यवसायगृहीतस्य कर्मदलिकस्य परमाणवो विभागशः कृत्वा मूलप्रकृतिभ्य उत्तरप्रकृतिभ्यश्च दत्ताः । तत्र न ज्ञायते जघन्यपदे उत्कृष्टपदे वा कस्याः कियान् भागस्ततो विशेषपरिज्ञानार्थमाह-'मूलपगईत्यादि' आसां मूलप्रकृतीनामु-त्तरस्वप्रकृतीनां च परस्परं भागस्य विशेषोऽल्पबहुत्वात् शास्त्रान्तरोक्तात् द्रष्टव्यः । तत्र मूलप्रकृतीनामल्पबहुत्वं दर्श्यते-इह कर्मणां स्थित्यनुसारतो भाग आभजति, यस्य बृहती स्थितिस्तस्य बृहद्भागः, यस्य स्तोका तस्य स्तोक इति ।

तत्रायुषो भागः सर्वस्तोकः। तस्य सर्वस्या (सर्वेभ्योऽ) प्यन्येभ्यः स्तोकस्थितिकत्वात्। तत्स्थितेरुत्कर्षतोऽपि त्रयस्त्रिंशत्सागरोपमप्रमाणत्वात्। ततो नामगोत्रयोर्भागो बृहत्तरः। तयोः स्थितेर्विंशतिसागरोपमकोटीकोटीप्रमाणत्वात्। स्वस्थाने तु द्वयोरपि परस्परं तुल्यः, समानस्थितिकत्वात्। ततोऽपि ज्ञानावरणदर्शनावरणान्तरायाणां बृहत्तमः। तेषां स्थितेस्त्रिंशत्सागरोपमकोटीकोटीप्रमाणत्वात्, स्वस्थाने तु परस्परं तुल्य एव, तुल्यस्थितिकत्वात्। ततोऽपि मोहनीयस्य बृहत्तमः, तस्य स्थितेः सप्ततिसागरोपमकोटीकोटीप्रमाणत्वात्। वेदनीयं यद्यपि ज्ञानावरणीयादिभिः सह समस्थितिकं, तथापि तस्य भागः सर्वोत्कृष्ट एव वेदितव्यः। अन्यथाऽस्य पटुतरस्वफलसुखदुःखोपदर्शकत्वानुपपत्तेः। इदानीं स्वस्वोत्तरप्रकृतीनामुत्कृष्टपदे जघन्यपदे चाल्पबहुत्वमभिधीयते-तत्रोत्कृष्टपदे सर्वस्तोकं केवलज्ञानावरणस्य प्रदेशाग्रं। ततो मनःपर्यवज्ञानावरणीयस्यानन्तगुणं। ततोऽवधिज्ञानावरणीयस्य विशेषाधिकं। ततः श्रुतज्ञानावरणीयस्य विशेषाधिकं। ततोऽपि मतिज्ञानावरणीयस्य विशेषाधिकं। तथा दर्शनावरणीये उत्कृष्टपदे सर्वस्तोकं प्रचलायाः प्रदेशाग्रं। ततो निद्राया विशेषाधिकं। ततोऽपि प्रचलाप्रचलाया विशेषाधिकं। ततोऽपि निद्रानिद्राया विशेषाधिकं। ततः स्त्यानर्द्धेर्विशेषाधिकं। ततः केवलदर्शनावरणीयस्य विशेषाधिकं। ततोऽवधिदर्शनावरणीयस्यानन्तगुणं। ततोऽचक्षुर्दर्शनावरणीयस्य विशेषाधिकं। ततोऽपि चक्षुर्दर्शनावरणीयस्य विशेषाधिकं। तथा सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमसातवेदनीयस्य। ततो विशेषाधिकं सातवेदनीयस्य। तथा मोहनीये सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमप्रत्याख्यानावरणमानस्य। ततोऽप्रत्याख्यानावरणक्रोधस्य विशेषाधिकं। ततोऽप्रत्याख्यानावरणमायाया विशेषाधिकं। ततोऽप्रत्याख्यानावरणलोभस्य विशे-

षाधिकं । ततः प्रत्याख्यानावरणमानस्य विशेषाधिकं । ततः प्रत्याख्यानावरणक्रोधस्य विशेषाधिकं । ततः प्रत्याख्यानावरणमायाया विशेषाधिकं । ततः प्रत्याख्यानावरणलोभस्य विशेषाधिकं । ततोऽनन्तानुबन्धिमानस्य विशेषाधिकं । ततोऽनन्तानुबन्धिक्रोधस्य विशेषाधिकं । ततोऽनन्तानुबन्धिमायाया विशेषाधिकं । ततोऽनन्तानुबन्धिलोभस्य विशेषाधिकं । ततो मिथ्यात्वस्य विशेषाधिकं । ततो जुगुप्साया अनन्तगुणं । ततो भयस्य विशेषाधिकं । ततो हास्यशोकयोर्विशेषाधिकं, स्वस्थाने तु द्वयोरपि परस्परं तुल्यं । ततो रत्यरत्योर्विशेषाधिकं, तयोः पुनः स्वस्थाने तुल्यं । ततः स्त्रीवेदनपुंसकवेदयोर्विशेषाधिकं, स्वस्थाने तु द्वयोरपि परस्परं तुल्यं । ततः संज्वलनक्रोधस्य विशेषाधिकं । ततः संज्वलनमानस्य विशेषाधिकं । ततः पुरुषवेदस्य विशेषाधिकं । ततः संज्वलनमायाया विशेषाधिकं । ततः संज्वलनलोभस्यासंख्येयगुणं । तथा चतुर्णामप्यायुषामुत्कृष्टपदे प्रदेशाग्रं परस्परं तुल्यं । नामकर्मणि उत्कृष्टपदे प्रदेशाग्रं गतौ देवगतिनरकगत्योः सर्वस्तोकं । ततो मनुजगतौ विशेषाधिकं । ततस्तिर्यग्गतौ विशेषाधिकं । तथा जातौ चतुर्णां द्वीन्द्रियादिजातिनाम्नामुत्कृष्टपदे प्रदेशाग्रं सर्वस्तोकं, स्वस्थाने तु तेषां परस्परं तुल्यं । तत एकेन्द्रियजातेर्विशेषाधिकं । तथा शरीरनाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमाहारकशरीरस्य । ततो वैक्रियशरीरनाम्नो विशेषाधिकं । तत औदारिकशरीरनाम्नो विशेषाधिकं । ततस्तैजसशरीरनाम्नो विशेषाधिकं । ततोऽपि कार्मणशरीरनाम्नो विशेषाधिकं । एवं संघातननाम्न्यपि द्रष्टव्यं । तथा बन्धननाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमाहारकाहारकबन्धननाम्नः । तत आहारकतैजसनाम्नो विशेषाधिकं । तत आहारककार्मणबन्धननाम्नो विशेषाधिकं । तत आहारकतैजसकार्मणबन्धननाम्नो विशेषा-

धिकं । ततो वैक्रियवैक्रियशरीरबन्धननाम्नो विशेषाधिकं । ततो वैक्रियतैजसबन्धननाम्नो विशेषाधिकं । ततो वैक्रियकार्मणबन्धननाम्नो विशेषाधिकं । ततो वैक्रियतैजसकार्मणबन्धननाम्नो विशेषाधिकं । तत औदारिकौदारिकबन्धननाम्नो विशेषाधिकं । तत औदारिकतैजसबन्धननाम्नो विशेषाधिकं । तत औदारिककार्मणबन्धननाम्नो विशेषाधिकं । ततोऽप्यौदारिकतैजसकार्मणबन्धननाम्नो विशेषाधिकं । ततस्तैजसतैजसबन्धननाम्नो विशेषाधिकं । ततस्तैजसकार्मणबन्धननाम्नो विशेषाधिकं । ततः कार्मणकार्मणबन्धननाम्नो विशेषाधिकं । तथा संस्थाननाम्नि संस्थानानामाद्यन्तवर्जानां चतुर्णामुत्कृष्टपदे प्रदेशाग्रं सर्वस्तोकं, स्वस्थाने तु तेषां परस्परं तुल्यं । ततः समचतुरस्रसंस्थानस्य विशेषाधिकं । ततोऽपि हुंडसंस्थानस्य विशेषाधिकं । तथांगोपांगनाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमाहारकांगोपांगनाम्नः । ततो वैक्रियांगोपांगनाम्नो विशेषाधिकं । ततोऽप्यौदारिकांगोपांगनाम्नो विशेषाधिकं । तथा संहनननाम्नि सर्वस्तोकमाद्यानां पञ्चानां संहननानामुत्कृष्टपदे प्रदेशाग्रं, स्वस्थाने तु तेषां परस्परं तुल्यं । ततः सेवार्तसंहननस्य विशेषाधिकं । तथा वर्णनाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रं कृष्णवर्णनाम्नः । ततो नीलवर्णनाम्नो विशेषाधिकं । ततो लोहितवर्णनाम्नो विशेषाधिकं । ततो हारिद्रवर्णनाम्नो विशेषाधिकं । ततोऽपि शुक्लवर्णनाम्नो विशेषाधिकं । तथा गन्धनाम्नि सर्वस्तोकं सुरभिगन्धनाम्नः । ततो विशेषाधिकं दुरभिगन्धनाम्नः । तथा रसनाम्नि सर्वस्तोकं कटुरसनाम्नः । ततस्तिक्तरसनाम्नो विशेषाधिकं । ततः कषायरसनाम्नो विशेषाधिकं । ततः अम्लरसनाम्नो विशेषाधिकं । ततोऽपि मधुररसनाम्नो विशेषाधिकं । तथा स्पर्शनाम्नि सर्वस्तोकमुत्कृष्टपदे कर्कशगुरुस्पर्शनाम्नोः प्रदेशाग्रं, स्वस्थाने तु द्वयोरपि परस्परं तुल्यं ।

ततो मृदुलघुस्पर्शनाम्नोर्विशेषाधिकं, स्वस्थाने तु द्वयोरपि तयोः परस्परं तुल्यं । ततो रूक्षशीतस्पर्शनाम्नोर्विशेषाधिकं, स्वस्थाने तु तयोर्द्वयोरपि परस्परं तुल्यं । ततः स्निग्धोष्णस्पर्शनाम्नोर्विशेषाधिकं, स्वस्थाने तु तयोरपि द्वयोः परस्परं तुल्यं । तथानुपूर्वीनाम्नि सर्वस्तोकं प्रदेशाग्रं देवगतिनरकगत्यानुपूर्व्योः, स्वस्थाने तु द्वयोरपि परस्परं तुल्यं । ततो मनुजगत्यानुपूर्व्या विशेषाधिकं । ततस्तिर्यगानुपूर्व्या विशेषाधिकं । तथा सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रं त्रसनाम्नः । ततो विशेषाधिकं स्थावरनाम्नः । तथा सर्वस्तोकं प्रदेशाग्रं पर्याप्तनाम्नः । ततो विशेषाधिकमपर्याप्तनाम्नः । एवं स्थिरास्थिरयोः शुभाशुभयोः सुभगदुर्भगयोः आदेयानादेययोः सूक्ष्मबादरयोः प्रत्येकसाधारणयोर्वाच्यं । तथा सर्वस्तोकमयशःकीर्तिनाम्नः प्रदेशाग्रं । ततो यशःकीर्तिनाम्नः संख्येयगुणं । शेषाणामातपोद्योतप्रशस्ताप्रशस्तविहायोगतिसुस्वरदुःस्वराणां परस्परं तुल्यमुत्कृष्टपदे प्रदेशाग्रं । निर्माणोच्छ्वासपराघातोपघातागुरुलघुतीर्थकराणां त्वल्पबहुत्वं नास्ति, येन इदमल्पबहुत्वं सजातीयप्रकृत्यपेक्षया, यथा कृष्णादिवर्णनाम्नः शेषवर्णापेक्षं, प्रतिपक्षप्रकृत्यपेक्षया वा यथा सुभगदुर्भगयोः । न चैताः परस्परं सजातीया अभिन्नैकमूलपिण्डप्रकृत्यभावात् । नापि विरुद्धा युगपदपि बन्धसम्भवात् । तथा गोत्रे सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रं नीचैर्गोत्रस्य । ततो विशेषाधिकमुच्चैर्गोत्रस्य । तथाऽन्तराये सर्वस्तोकं दानान्तरायस्य । ततो

---

१ अत्र च श्रीमद्भिर्देवेन्द्रसूरिभिः स्वोपज्ञशतकवृत्तावन्यथा व्याख्यातं प्रस्तुतप्रकरणाभिधया, तद्भविष्यति तदानीं कापि लेखकदोषमूला शोधकदोषमूला वा तादृशी काचन प्रतिष्टीका प्रतीवान्ये, दृश्यमानेषु त्वादर्शेषु न तथाविधः पाठः, युक्तिस्त्वेवंविधेऽतीन्द्रियेऽस्यामर्थेऽकिञ्चित्करैवेत्युपलभ्यमानः पाठ एव शरणम् ।

लाभान्तरायस्य विशेषाधिकं । ततो भोगान्तरायस्य विशेषाधिकं । तत उपभोगान्तरायस्य विशेषाधिकं । ततो वीर्यान्तरायस्य विशेषाधिकं । तदेवमुक्तमुत्तरप्रकृतीनामुत्कृष्टपदे प्रदेशाग्रमल्पबहुत्वं । संप्रति जघन्यपदे तदभिधीयते —तत्र सर्वस्तोकं जघन्यपदे प्रदेशाग्रं केवलज्ञानावरणीयस्य । ततो मनःपर्यवज्ञानावरणीयस्यानन्तगुणं । ततोऽवधिज्ञानावरणीयस्य विशेषाधिकं । ततः श्रुतज्ञानावरणीयस्य विशेषाधिकं । ततोऽपि मतिज्ञानावरणीयस्य विशेषाधिकं । तथा दर्शनावरणीये सर्वस्तोकं जघन्यपदे प्रदेशाग्रं निद्रायाः । ततः प्रचलाया विशेषाधिकं । ततो निद्रानिद्राया विशेषाधिकं । ततः प्रचलाप्रचलाया विशेषाधिकं । ततः स्त्यानर्द्धेर्विशेषाधिकं । ततः केवलदर्शनावरणस्य विशेषाधिकं । ततोऽवधिदर्शनावरणस्यानन्तगुणं । ततोऽचक्षुर्दर्शनावरणीयस्य विशेषाधिकं । ततोऽपि चक्षुर्दर्शनावरणीयस्य विशेषाधिकं । तथा मोहनीये सर्वस्तोकं जघन्यपदे प्रदेशाग्रमप्रत्याख्यानावरणमानस्य । ततोऽप्रत्याख्यानावरणस्य क्रोधस्य विशेषाधिकं । ततोऽप्रत्याख्यानावरणमायाया विशेषाधिकं । ततोऽप्रत्याख्यानावरणलोभस्य विशेषाधिकं । तत एवमेव प्रत्याख्यानावरणमानक्रोधमायालोभानामनन्तानुबन्धिमानक्रोधमायालोभानां यथोत्तरं विशेषाधिकं वक्तव्यं । ततो मिथ्यात्वस्य विशेषाधिकं । ततो जुगुप्साया अनन्तगुणं । ततो भयस्य विशेषाधिकं । ततो हास्यशोकयोर्विशेषाधिकं, स्वस्थाने तु तयोः परस्परं तुल्यं । ततो रत्यरत्योर्विशेषाधिकं । स्वस्थाने तु तयोरपि परस्परं तुल्यं । ततोऽन्यतरवेदस्य विशेषाधिकं । ततः संज्वलनमानक्रोधमायालोभानां यथोत्तरं विशेषाधिकं । तथायुषि सर्वस्तोकं जघन्यपदे प्रदेशाग्रं तिर्यग्मनुष्यायुषोः । ततो देवनारकायुषोरसंख्येयगुणं । तथा नाम्नि गतौ सर्वस्तोकं जघन्यपदे प्रदेशाग्रं तिर्यग्गतेः । ततो विशेषाधिकं मनुजगतेः ।

ग्रन्थेन प्रागेव स्पर्धकप्ररूपणा कृता तथापि इहापि तासां स्पर्धकानि प्राप्यन्त इति भूय उपादानं। एवं करणेष्वपि बन्धनादिषु यथासंभवं स्पर्धकानि वाच्यानि ॥ ४९ ॥

तथा चाह—

**संभवतो ठाणाइं कम्मपएसेहिं होंति नेयाइं। करणेसु य उदयम्मि य अणुमाणेणेवमेएणं॥ ५०॥**

संभवतो त्ति—संभवतः संभवमाश्रित्य स्थानानि प्रदेशसत्कर्मस्थानानि। करणेषु बन्धनादिषु उदये च। कर्मप्रदेशेभ्यः कर्मप्रदेशानधिकृत्य। ज्ञेयानि ज्ञातव्यानि। कथमित्याह—एवमुपदर्शितेन। एतेन प्रागुक्तेन अनुमानेन प्रकारेण ज्ञातव्यानि। तथाहि—बन्धनकरणे जघन्यं योगस्थानमादिं कृत्वा यावदुत्कृष्टयोगस्थानं एतावन्ति प्रदेशसत्कर्मस्थानानि बन्धमाश्रित्य प्राप्यन्ते, तावन्ति चैकं स्पर्धकं। एवं संक्रमणादिष्वपि प्रत्येकं यथायोगं भावनीयम् ॥ ५० ॥

**करणोदयसंताणं पगइट्ठाणेसु सेसगतिगे य। भूयक्कारप्पयरो अवट्ठिओ तह अवत्तव्वो ॥ ५१ ॥**

करणोदयसंताणं ति—अष्टानां करणानां उदयसत्तयोश्च प्रकृतिस्थानेषु 'सेसगतिगे य त्ति' शेषके च त्रिके स्थित्यनुभागप्रदेशरूपे प्रत्येकं चत्वारो विकल्पा ज्ञातव्याः। तद्यथा—भूयस्कारः, अल्पतरः, अवस्थितः, अवक्तव्यश्च. ॥ ५१ ॥

एतेषां चतुर्णां लक्षणमिदम्—

**एगादहिगे पढमो एगाईऊणगम्मि बिइओ उ। तत्तियमेत्तो तइओ पढमे समये अवत्तव्वो ॥ ५२ ॥**

एगादहिगे त्ति – इह बन्धमाश्रित्य भावना क्रियते । बन्धो द्विधा–मूलप्रकृतीनामुत्तरप्रकृतीनां च । तत्र मूलप्रकृतीनां बन्धः कदाचित् अष्टानां, कदाचित्सप्तानां, कदाचित् षण्णां, कदाचिदेकस्याः । तत्र यदा स्तोकाः प्रकृतीराबध्नन् परिणामविशेषतो भूयसीः प्रकृतीर्बध्नाति, यथा सप्त बद्ध्वा अष्टौ बध्नाति, यदा षड् एकां च बद्ध्वा सप्त, तदा स बन्धो भूयस्कारः । तथा चाह–'एगादहिगे पढमो' एकादिभिरेकद्वित्र्यादिभिः प्रकृतिभिरधिके बन्धे प्रथमः प्रकारो भवति, भूयस्कारो बन्धो भवतीत्यर्थः । यदा तु प्रभूताः प्रकृतीर्बध्नन् परिणामविशेषतः स्तोका बद्धुमारभते, यथाऽष्टौ बद्ध्वा सप्त बध्नाति, सप्त वा बद्ध्वा षड्, षड्वा बद्ध्वा एकां, तदानीं स बन्धोऽल्पतरः। तथा चाह–'एगाईऊणगम्मि बिईओ उ' एकादिभिरेकद्वित्र्यादिभिः प्रकृतिभिरूने बन्धे द्वितीयः प्रकारः अल्पतर इत्यर्थः। तथा स एव भूयस्कारोऽल्पतरो वा द्वितीयादिषु समयेषु तावन्मात्रतया प्रवर्तमानोऽवस्थित इति व्यपदेशं लभते । तथा चाह 'तत्तियमेत्तो तईओ' तावन्मात्रस्तृतीयोऽवस्थित इत्यर्थः। एते त्रयोऽपि प्रकारा मूलप्रकृतीनां संभवन्ति चतुर्थस्तु न संभवति। न हि मूलप्रकृतीनां सर्वासां बन्धव्यवच्छेदे सति भूयोऽपि बन्धः संभवति येन चतुर्थो बन्धः स्यात्। तत उत्तरप्रकृतीरधिकृत्य स वेदितव्यः। यथा मोहनीयस्य तद्गतसर्वोत्तरप्रकृतिबन्धव्यवच्छेदे सति उपशान्तमोहगुणस्थानकात् प्रतिपाते भूयोऽपि बन्धारंभप्रथमसमये, स हि तदानीं न भूयस्कारो वक्तुं शक्यते, नाप्यल्पतरः, नाप्यवस्थितः, तल्लक्षणायोगात्, ततोऽसाववक्तव्य इत्युच्यते, भूयस्कारादिनाम्ना वक्तुमशक्यत्वात् । एवमुत्तरप्रकृतीरधिकृत्य ज्ञानावरणीयादीनां वेदनीयवर्जानामवक्तव्यो भावनीयः । वेदनीयस्य त्ववक्तव्यो न संभवति, तस्य हि सर्वथा बन्धव्यवच्छेदः सयोगिकेवलिचरमसमये । न च ततः प्रतिपातो येन भूयो बन्धः प्रवर्तमानः प्रथमसमयेऽव-

ग्रन्थेन प्रागेव स्पर्धकप्ररूपणा कृता तथापि इहापि तासां स्पर्धकानि प्राप्यन्त इति भूय उपादानं। एवं करणेष्वपि बन्धनादिषु यथासंख्यं स्पर्धकानि वाच्यानि ॥ ४९ ॥

तथा चाह—

संजलतो ठाणाइं कम्मपएसेहिं होंति नेयाइं। करणेसु य उदयम्मि य अणुमाणेणेवमेएणं ॥ ५० ॥

संजलतो त्ति—संज्वलतः संज्वलमाश्रित्य स्थानानि प्रदेशसत्कर्मस्थानानि। करणेषु बन्धनादिषु उदये च। कर्मप्रदेशेभ्यः कर्मप्रदेशानधिकृत्य। ज्ञेयानि ज्ञातव्यानि। कथमित्याह—एवमुपदर्शितेन। एतेन प्रागुक्तेन अनुमानेन प्रकारेण ज्ञातव्यानि। तथाहि—बन्धनकरणे जघन्यं योगस्थानमादिं कृत्वा यावदुत्कृष्टयोगस्थानं एतावन्ति प्रदेशसत्कर्मस्थानानि बन्धमाश्रित्य प्राप्यन्ते, तावन्ति चैकं स्पर्धकं। एवं संक्रमणादिष्वपि प्रत्येकं यथायोगं भावनीयम् ॥ ५० ॥

करणोदयसंताणं पगइट्ठाणेसु सेसगतिगे य। भूयक्कारप्पयरो अवट्ठिओ तह अवत्तव्वो ॥ ५१ ॥

करणोदयसंताणं ति—अष्टानां करणानां उदयसत्तयोश्च प्रकृतिस्थानेषु 'सेसगतिगे य त्ति' शेषके च त्रिके स्थित्यनुभागप्रदेशरूपे प्रत्येकं चत्वारो विकल्पा ज्ञातव्याः। तद्यथा—भूयस्कारः, अल्पतरः, अवस्थितः, अवक्तव्यश्च. ॥ ५१ ॥

एतेषां चतुर्णां लक्षणमिदम्—

एगादहिगे पढमो एगाईऊणगम्मि बिइओ उ। तत्तियमेत्तो तइओ पढमे समये अवत्तव्वो ॥ ५२ ॥

एगादहिगे त्ति – इह बन्धमाश्रित्य भावना क्रियते । बन्धो द्विधा–मूलप्रकृतीनामुत्तरप्रकृतीनां च । तत्र मूलप्रकृतीनां बन्धः कदाचित् अष्टानां, कदाचित्सप्तानां, कदाचित् षण्णां, कदाचिदेकस्याः । तत्र यदा स्तोकाः प्रकृतीराबध्नन् परिणामविशेषतो भूयसीः प्रकृतीर्बध्नाति, यथा सप्त बद्ध्वा अष्टौ बध्नाति, यदा षट् एकां च बद्ध्वा सप्त, तदा स बन्धो भूयस्कारः । तथा चाह–'एगादहिगे पढमो' एकादिभिरेकद्व्यादिभिः प्रकृतिभिरधिके बन्धे प्रथमः प्रकारो भवति, भूयस्कारो बन्धो भवतीत्यर्थः । यदा तु प्रभूताः प्रकृतीर्बध्नन् परिणामविशेषतः स्तोका बद्धुमारभते, यथाऽष्टौ बद्ध्वा सप्त बध्नाति, सप्त वा बद्ध्वा षट्, षड् वा बद्ध्वा एकां, तदानीं स बन्धोऽल्पतरः। तथा चाह–'एगाईऊणगम्मि बिइओ उ' एकादिभिरेकद्व्यादिभिः प्रकृतिभिरूने बन्धे द्वितीयः प्रकारः अल्पतर इत्यर्थः । तथा स एव भूयस्कारोऽल्पतरो वा द्वितीयादिषु समयेषु तावन्मात्रतया प्रवर्तमानोऽवस्थित इति व्यपदेशं लभते । तथा चाह 'तत्तियमेत्तो तईओ' तावन्मात्रस्तृतीयोऽवस्थित इत्यर्थः। एते त्रयोऽपि प्रकारा मूलप्रकृतीनां संभवन्ति। चतुर्थस्तु न संभवति । न हि मूलप्रकृतीनां सर्वासां बन्धव्यवच्छेदे सति भूयोऽपि बन्धः संभवति येन चतुर्थो बन्धः स्यात्। तत उत्तरप्रकृतीरधिकृत्य स वेदितव्यः। यथा मोहनीयस्य तद्गतसर्वोत्तरप्रकृतिबन्धव्यवच्छेदे सति उपशान्तमोहगुणस्थानकात् प्रतिपाते भूयोऽपि बन्धारंभप्रथमसमये, स हि तदानीं न भूयस्कारो वक्तुं शक्यते, नाप्यल्पतरः, नाप्यवस्थितः, तल्लक्षणायोगात्, ततोऽसाववक्तव्य इत्युच्यते, भूयस्कारादिनाम्ना वक्तुमशक्यत्वात् । एवमुत्तरप्रकृतीरधिकृत्य ज्ञानावरणीयादीनां वेदनीयवर्जानामवक्तव्यो भावनीयः । वेदनीयस्य त्ववक्तव्यो न संभवति, तस्य हि सर्वथा बन्धव्यवच्छेदः सयोगिकेवलिचरमसमये । न च ततः प्रतिपातो येन भूयो बन्धः प्रवर्तमानः प्रथमसमयेऽव-

कव्यः स्यात् । तदेवं मूलप्रकृतीरधिकृत्यावक्तव्यवर्जाः शेषास्त्रयः प्रकाराः, उत्तरप्रकृतीस्त्वधिकृत्य चत्वारोऽपि प्रकाराः संभवन्ति । यथा च बन्धे चत्वारोऽपि प्रकारा भाविता एवं संक्रमे उद्वर्तनायामपवर्तनायामुदीरणायामुपशमनायामुदये सत्तायां च प्रकृतिस्थानेषु स्थित्यनुभागप्रदेशस्थानेषु च यथायोगं स्वयमेव भावनीयाः ॥ ५२ ॥

करणोदयसंताणं सामित्तोघेहिं सेसगं नेयं । गईयाइमग्गणासुं संभवओ सुठ्ठु आगमिय ॥ ५३ ॥

करणोदयसंताणं ति—अष्टानां करणानामुदयसत्तयोश्च यदुक्तं प्रत्येकं सप्रपञ्चं स्वरूपं तत् ओघस्वामित्वमुच्यते। 'सामित्तोघेहिं ति' द्वितीयार्थे तृतीया, व्यक्त्यपेक्षया च बहुवचनं । ततश्च तानि ओघस्वामित्वानि यथोक्तकरणाष्टकोदयसत्तास्वरूपरूपाणि सुष्ठु आगम्य परिज्ञाय शेषकमपि ज्ञातव्यं क्व ज्ञातव्यमित्याह—गत्यादिषु चतुर्दशसु मार्गणास्थानेषु । कथमित्याह—संभवतो यथा संभवति यथा घटते तथैव, नान्यथा ॥ ५३ ॥

बंधोदीरणसंकमसंतुदयाणं जहन्नगाईहिं । संवेहो पगइ ठिई अणुभागपएसओ नेओ ॥ ५४ ॥

बंधोदीरण त्ति—बन्धोदीरणासंक्रमसत्तोदयरूपाणां पञ्चानां पदार्थानां प्रकृतिस्थित्यनुभागप्रदेशतः प्रकृतिस्थित्यनुभागप्रदेशानधिकृत्य जघन्याजघन्योत्कृष्टानुत्कृष्टैः संबन्धः परस्परमेककालमागमाविरोधेन मीलनं । यथा ज्ञानावरणीयस्य जघन्ये स्थितिबन्धे जघन्योऽनुभागबन्धः, जघन्यः प्रदेशबन्धः, अजघन्याः स्थित्युदीरणासंक्रमसत्तोदया इत्यादिरूपं, तत्पूर्वापरी सुष्ठु परिज्ञाय ज्ञातव्यम् ॥ ५४ ॥

तदेवमुक्ता सत्ता, तदभिधानाच्च यत्प्राक् प्रतिज्ञातं 'कम्मट्ठगस्स करणट्ठगुदयसंताणि वोच्छामि' इति तत्समर्थितं ।

संप्रति प्रकरणपरिज्ञाननिवन्धनां विशिष्टफलसंप्राप्तिमाह—

**करणोदयसंतविऊ तन्निज्जरकरणसंजमुज्जोगा । कम्मट्ठगुदयनिट्ठाजणियमणिट्ठं सुहमुवेंति ॥ ५५ ॥**

करणोदय त्ति—करणानामुक्तस्वरूपाणामुदयसत्तयोश्च सम्यक् परिज्ञानयुक्ताः । 'तन्निज्जरकरणसंजमुज्जोग त्ति' तासां करणोदयसत्तानां या निर्जरा तस्याः करणं निर्वर्तनं तदर्थं संयमं प्रति उद्योग उद्यमो येषां ते तन्निर्जराकरणसंयमोद्योगाः । ते इत्थंभूताः सन्तः किमित्याह—कर्माष्टकोदय ( सत्ता ) निष्ठाजनितं कर्माष्टकस्याष्टानां कर्मणामुदयनिष्ठया, उदयग्रहणं बन्धसत्ताद्युपलक्षणं, ततोऽयमर्थः–बन्धोदयसत्ताक्षयेण जनितमुत्पादितं यत् 'मणिट्ठं ति' मनस इष्टं । अथवा 'अणिट्ठं ति' न विद्यते निष्ठा पर्यवसानं यस्य तदनिष्ठं अपर्यवसानं सुखं । उभयत्रापि मोक्षसुखं । तत् उपयन्ति प्राप्नुवन्ति । तस्मादवश्यमिह प्रकरणे प्रेक्षावद्भिर्निरन्तरमभ्यासः करणीयः, कृत्वा च यथाशक्ति संयमाध्वनि प्रवर्तितव्यं । प्रवृत्तेन च सता संक्लिष्टाध्यवसायरूपकुपथपरिहारे यत्न आस्थेय इति ॥ ५५ ॥

संप्रत्याचार्य आत्मन औद्धत्यं परिहरन्नन्येषां बहुश्रुतानां प्रकरणार्थपरिभावनाविषये प्रार्थनां च कुर्वन् प्रेक्षावतां प्रकरणविषये उपादेयबुद्धिपरिग्रहार्थं प्रकरणस्य परंपरया सर्वविन्मूलतां ख्यापयति—

**इय कम्मप्पगडीओ जहासुयं नीयमप्पमइणा वि । सोहियणाभोगकयं कहंतु वरदिट्ठिवायन्नू ॥ ५६ ॥**

इय त्ति—अल्पमतिनापि अल्पबुद्धिनापि सता । इत्येवमुक्तेन प्रकारेण गुरुचरणकमलपर्युपासनां कुर्वता गुरुपादमूले यथा मया श्रुतं तथा कर्मप्रकृतेः कर्मप्रकृतिनामकात्प्राभृतात् । दृष्टिवादे हि चतुर्दश पूर्वाणि । तत्र च द्वितीं-

येऽग्रायणीयाभिधानेऽनेकवस्तु समन्विते पूर्वे पञ्चमं वस्तु विंशतिप्राभृतपरिमाणं । तत्र कर्मप्रकृत्याख्यं चतुर्थं प्राभृतं चतुर्विंशत्यनुयोगद्वारमयं । तस्मादिदं प्रकरणं नीतं आकृष्टमित्यर्थः । अस्मिंश्च प्रकरणे यत्किमपि स्खलितमनाभोगकृतमनाभोगजनितं । छद्मस्थस्य हि कृतप्रयत्नस्याप्यावरणसामर्थ्यतोऽनाभोगः संभवति । ततोऽनाभोगजनितं यत्किमपि स्खलितं तत् शोधयित्वाऽपनीय । ये वरा उत्कलितबुद्ध्यतिशयसंपन्ना दृष्टिवादज्ञा द्वादशांगविदस्ते । ममोपरि महतीमनुग्रहबुद्धिमास्थाय । तत्रान्यत् पदमागमानुसारि प्रक्षिप्य कथयन्तु यथेदमत्र पदं समीचीनं नेदमिति, न पुनरुपेक्षारूपोऽप्रसादस्तैः कर्तव्यः । अत्र 'इय कम्मपयडीउ' इत्यादिना ग्रन्थेन प्रकरणस्य सर्वविन्मूलता ख्यापिता द्रष्टव्या । दृष्टिवादो हि भगवता साक्षादर्थतोऽभिहितः । सूत्रतस्तु सुधर्मस्वामिना । दृष्टिवादान्तर्गतं च कर्मप्रकृतिप्राभृतं । तस्माच्चेदं प्रकरणमुद्धृतमिति परंपरया सर्वविन्मूलम् ॥ ५६ ॥ ४७४ ॥

इह शास्त्रस्यादौ मध्येऽवसाने च मंगलमवश्यमभिधातव्यं । आदिमंगलाभिधाने हि शास्त्रमविघ्नेन परिसमाप्तिमियर्ति, मध्यमंगलाभिधानतश्च शिष्यप्रशिष्यादिपरंपरागमनेन स्थैर्यमाधत्ते, पर्यन्तमंगलाभिधानप्रभावतः पुनः शिष्यप्रशिष्यादिभिरवधार्यमाणं तेषां चेतसि सुप्रतिष्ठितं भवति । तत्रादिमंगलं 'सिद्धं सिद्धत्थसुयं' इत्याद्युक्तं । मध्यमंगलं तु 'अकरण अणुन्नाए अणुयोगधरे पणिवयामि' इति । संप्रति पुनः पर्यवसानमंगलमाह—

**जस्स वरसासणावयवफरिसपविकसियविमलमइकिरणा । विमलंति कम्ममइले सो मे सरणं महावीरो**

जस्स त्ति—यस्य भगवतो महावीरस्य वरमनुत्तरं यच्छासनं तदवयवसंस्पर्शात् ये प्रकर्षेण विकसिता उद्बोधं गता

॥ श्रीमलयगिरिकृता कर्मप्रकृतिटीका समाप्ता ॥

इति श्रेष्ठि-देवचन्द्र लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः १७.